G 5.71.13
B 6.4.91
L 5.71.14

ते सह्यं समतिक्रम्य मलयं च महागिरिम् ।
आसेदुरानुपूर्व्येण समुद्रं भीमनिःस्वनम् ॥ ६५

अवरुह्य जगामाशु वेलावनमनुत्तमम् ।
रामो रमयतां श्रेष्ठः ससुग्रीवः सलक्ष्मणः ॥ ६६

अथ धौतोपलतलां तोयौघैः सहसोत्थितैः ।
वेलामासाद्य विपुलां रामो वचनमब्रवीत् ॥ ६७

एते वयमनुप्राप्ताः सुग्रीव वरुणालयम् ।
इहेदानीं विचिन्ता सा या न पूर्वं समुत्थिता ॥ ६८

अतः परमतीरोऽयं सागरः सरितां पतिः ।
न चायमनुपायेन शक्यस्तरितुमर्णवः ॥ ६९

तदिहैव निवेशोऽस्तु मन्त्रः प्रस्तूयतामिह ।
यथेदं वानरबलं परं पारमवाप्नुयात् ॥ ७०

इतीव स महाबाहुः सीताहरणकर्शितः ।
रामः सागरमासाद्य वासमाज्ञापयत्तदा ॥ ७१

---

65 D1 om 65$^{cd}$ —$^{a}$) V3 च विंध्यम्, B विंध्य सम् (B1 अन्) G1 च सह्यम् (for सह्य सम्) Ś1 Ñ1 D1-4.9.11 स विंध्य गिरिमासाद्य —After 65$^{ab}$, Ś1 Ñ1 D1-4.9.13 ins.

83* वनानि चाप्यतिक्रम्य नदीश्च विमलोदका ।
[D3.4 [अ]पि (for [अ]ति)]

—$^{c}$) Ś1 Ñ1 D2.3.4.8.13 आससादुस्तु, D3 आसमासतु (sic) (for आसेदुरानु) —$^{d}$) M1.2 सागर (for समुद्र) D1.4.5.8.10.11 T1 G M भीमनिस्वन (D1.4.8 °दर्शन), D3 भीमनि स्वन D6 T2.3 मकरालय
—After 65 Ś1 Ñ1 D1-4.8.13 read 88$^{cd}$.

66 Ñ1 D4 om 66–68$^{d}$ D1 om 66$^{ab}$ —$^{a}$) Ś1 D13 अवतीर्य, Ñ2 आरुह्य (sic) (for अवरुह्य) D2.3.8 ततश्च (for जगाम) M1.2 [अ]थ (for [आ]शु) —D3 om from 66$^{b}$ up to the prior half of 84* —B1 [व]चलम् (for वनम्) D2.3 उपागमत् (for अनुत्तमम्) —$^{d}$) Ś1 V3 B1.3 D7.9.12 सुग्रीवश्च स(D7 °व स च) Ñ2 M2 ससुग्रीवश्च (M1 °व सह [hypm]) B4 D1 G2.3 M3 सुग्रीव सह D1 सुग्रीवो हि स (for ससुग्रीव स)

67 N1 D1.3 om 67 (cf v l 66) —$^{a}$) Ñ1(m) V2 B L3 [अ]मल (for [उ]पल) Ś1 Ñ2(m) V1 B1.2.4 D1.9.13 शिला, T2 तल (for तला) —$^{b}$) N2 V2 B D1.3 तोयौघ (for °घै) Ś1 D13 सहसावृतां Ñ1 V1 B D6 समभिप्लुता D1 द्रुममण्डितां D3 °थिता T1.2 °ह(T2 °दि)त (for सहसोत्थितै) —$^{cd}$) D6 T2.3 सहसा (for विपुलां) B2 विपुलां वेलमासाद्य (by transp) B1 D2.3 सुग्रीवम् (for वचनम्) D1 प्राप्य रामस्तां भूमिं सुग्रीवमिदमब्रवीत्

68 N1 D1 om 68$^{ab}$, D3 om up to the prior half of 84* (for all cf v l 66) —$^{b}$) N2 D1 एवमासमिः V1 B D1-3 सकलोदधिं (for वरुणालयम्) —After 68$^{ab}$, D1 reads 63–64 (preceded by 85*) —$^{c}$) D1 T1 G3 विचिन्ता सा D6 विचिन्तम (metri causa) (for विचिन्ता सा) —$^{d}$) D2.10.11 G1 उपस्थिता (for समुत्थिता)
—For 68$^{cd}$, Ś1 Ñ1 D1-4.8.11 subst and all (except D3) read after 72$^{ab}$

84* इहेदानीं विचिन्त्यो हि न य पूर्वं समाहितै ।
[D3 om the prior half Ñ1 सर्व (for पूर्व) D1 समाहित]

—For 68$^{cd}$, Ñ2 V3 B D6 subst Ś1 D1-4.8.13 ins after 68$^{ab}$

85* सतारश्चिन्त्यतामत्र पूर्वं च परिचिन्तिता ।
[B1 अत्र (for अत्र) D1 च पूर्वं (by transp) Ś1 प्रसमुत्थित V3 महान्वित B1 समन्वित B3 D3.9.13 समर्थि(D3 °ति)त, B4 समन्वित, D1 सचि शिवम् (for परिचिन्तिता)]

69 D1 om 69$^{ab}$ —$^{a}$) Ñ1 B3 तत (for अत) Ś1 Ñ V3 B D3.9.13 परमगाधो, D3.4 G1 °पारो, T1 °धीरो, Cm g k t as in text (for परमतीरो) —After 69$^{ab}$ Ś1 D1-4.13 read 72$^{ab}$ —$^{c}$) D3 अनयेनेह (for अनुपायेन) N1 स चायमुपायेन (corrupt) —$^{d}$) Ś1 Ñ1 D1-4.9.13 शक्यस्त(Ś1 °क्यो)तुं(D3 °म) कथंचन Ñ2 V2 B D6 तरितुं शक्यतेऽर्णव (V1 °स्तु)

70 Ś1 D13 om 70 —$^{ab}$) D4 इमं हि (for इहैव) Ñ1 D1-4.8 समाविश(D6 °दि)त्य (for निवेशोऽस्तु) Ñ1 D1.4.8 सर्व संचिन्त्यतां सदा (for $^{b}$) Ñ2 V2 B D6 निवेशमिह कुर्मो वा मन्त्र(Ñ2 B1 D6 चिंत)यत्र हित मम —$^{c}$) D1.3 यदृच G3 यथैवद् (for यथेदं) D1 उपागमत् D3 अवाप्नुयु (sic) (for अवाप्नुयात्)

71 Ś1 D1-4.8.13 transp 71 and 72$^{abcd}$ (Ś1 D13 om 72$^{cd}$) N1 transp 71 and 72 —$^{a}$) Ś1 Ñ V2 B D1.4.8.9.13 इत्येव स(Ñ2 V1 B D6 एवमुक्त्वा) महाबाहु (Ś1 D13 °बाहु) —$^{b}$) Ś1 Ñ2 V3 B1.2 D3.4.8.9 कर्षित D13 -कारित (sic) (for कर्शित) —$^{d}$) B1 रामग (sic) D2.3 सेनाम् (for वासम्) Ś1 D13 च तु (for तदा) —After 71, N V2 B D1-4.9-11 S ins.

86* सर्वं सेना निवेश्यन्तां वेलायां हरिपुंगव ।
[V2 B D3.4.9 T2 G2 हरिपुंगवा G3 Cr सर्वा सेना निवेश्यन्तां वेलायां हरिपुंगवेति पाठः G]

संप्राप्तो मन्त्रकालो नः सागरस्येह लङ्घने ।
सा स्वां सेनां समुत्सृज्य मा च कश्चित्कुतो व्रजेत् ।
गच्छन्तु वानराः शूरा ज्ञेयं छन्नं भयं च नः ॥ ७२

रामस्य वचनं श्रुत्वा सुग्रीवः सहलक्ष्मणः ।
सेनां न्यवेशयत्तीरे सागरस्य द्रुमायुते ॥ ७३

विराजन्ती समीपस्थं सागरस्य तु तद्बलम् ।
मधुपाण्डुजलः श्रीमान्द्वितीय इव सागरः ॥ ७४

वेलावनमुपागम्य ततस्ते हरिपुंगवाः ।
विनिविष्टाः परं पारं काङ्क्षमाणा महोदधेः ॥ ७५

सा महार्णवमासाद्य हृष्टा वानरवाहिनी ।
वायुवेगसमाधूतं पश्यमाना महार्णवम् ॥ ७६

G B L

72 D5 om 72^ab, Ś2 D1 4 12 read 72^ab after 69^ab —^a) G1 प्रयातो (for संप्राप्तो) D2 यात्र (for मन्त्र) —^b) B2 D6 समुद्रस्य (for सागरस्य) Ś1 D2-4 8 12 प, Ñ1 वि, D1 [स]वि, D5 T M [स]स, G2 [इ]त्र (for [इ]ह) —After 72^ab, Ś1 Ñ1 D1 4 12 read 84* —Ś1 D1-4 8 12 transp 71 and 72^cdef (Ś2 D12 om 72^cd) Ñ1 transp 71 and 72 —^c) D1 4 त्यतिकल्प्य, D2 8 परिक्रम्य (for समुत्सृज्य) —B1 reads 72^d in marg —^d) D2 यावत्, D3 मा च (for मा च) D1-4 8 केचित् T2 गच्छेत् (for कश्चित्) Ñ V1 B D5 T2 3 G2 M1 2 कुतश्चन V3 कुत पुन D1-4 8 कथचन G1 चनेत्कुत (by transp) Cr m k t as in text —^e) N2 V2 3 B D6 M1 2 गच्छेयु (B1 3 °त B4 °श M1 2 °त्तु) G3 गच्छतो Cm g k t as in text (for गच्छन्तु) Ś1 स्वैर (for शूरा) —^f) D1 छिद्र D5 छिद्रे (for छन्न) B2 D5 T3 M बल Cg k t as in text (for भय) N D1 4 8 9 हि न V1 2 B1 वह B3 वन B4 यत (for च न) Ś2 D12 यासार्थं सुसमाहिता

73 ^a) V1 3 B D6 तद्वच D1 3 8 तु(D1 च) वच (for वचन) D4 राघवस्य वच श्रुत्वा —^b) Ś1 N1 D2 4 8 12 ससुग्रीवा(D3 8 °व) सलक्ष्मणा(D3 8 °ण) —After 73^ab Ś1 D3 8 12 ins while Ñ1 D1 4 cont after 88* whereas D5 ins after 75^ab

87* भीमगम्भीरनिर्घोषा प्राज्यसत्त्वा महायशा ।

[Ś1 N1 D12 निर्घोषवतीत N1 सयत्वरा D1 3 4 8 महाभया (D1 °भ्या) (for °बला) ]

—^c) D6 9 T2 निवेशयद् (sic) N2 V1 3 B D9 न्यवेश्य तद्बल तीरे —^d) N2 B1 D9 द्रुमावृते (for °युते) —For 73^cd Ś1 N1 D1 4 8 12 subst

88* सेना सा न्यवसत्तीरे दक्षिणस्य महोदधे ।

[Ś1 D2 12 सा सेना (by transp) L(ed) सर्वे यत्नेन सतीरे (for the prior half) ]

74 ^a) N2 V2 3 B D9 विरराज (for विर°) —^b) Ś1 बल महत् D3 8 10 11 G2 M3 च तद्बलम् (for तु त°) N2 V1 3 B D9 हरिणा तद्बल बभौ —^c) L(ed) साम्बुनीर (for मधुपाण्डु) D12 G1 जल (for जल) ‖ Cr m मधुपानोत्कट श्रीमान्द्वि(Cm °मद्वि)तीय इव सागर इति(Cm °ति वा) पाठ । Ct मधुशब्दसमभिव्याहारात्पाण्डुशब्द पिङ्गल वर्णवाची ज्ञेय ‖ —^d) Ś1 भास्कर (for सागर)

75 ^a) D3 वस्थुस् (for ततस्) G2 M1 2 तद् (for ते) Ñ2 V1 3 B D9 T2 यूथपा (for पुंगवा) —After 75^ab, D3 ins 87* —^c) Ñ2 V1 3 B D9 सनिविष्टा D3 विनिविशु (sic) D7 10 11 M1 3 निविष्टास्ते(D10 11 °ष्ट) (for विनिविष्टा) —^d) D3 4 वीक्षमाणा (for काङ्क्ष°) —After 75 Ś1 D1 4 12 ins an additional colophon

[Colophon —*Kanda name* D1-4 12 सुन्दरकाण्डे —*Sarga name* Ś1 D12 समुद्रतीरनिवास D1 4 समुद्रतीरगमन(D4 °न) D2 समुद्रतीराभिगमन D3 समुद्रतीरवास —*Sarga no* (figures words or both) D1 3 4 12 om Ś1 73 D2 79 L(ed) 72 —After colophon D2 concludes with राम ]

—After 75 D5-7 10 11 S ins Ñ2 V1 3 B1(l 4 only) 4 D9 ins l 3-4 only after 75

89* तेषां निविशमानानां सैन्यसनाहनि स्वन ।
अन्तर्धाय महानादमर्णवस्य प्रशुश्रुवे ।
सा वानराणां ध्वजिनी सुग्रीवेणाभिपालिता ।
त्रिधा निविष्टा महती रामस्यार्थपराभवत् ।

[(l 1) D5 T2 G3 विनेश(T3 °विश्य)मानाना (for निवि°) —D5 om (hapl ?) from महानादम् in l 2 up to महार्ण in 76^a —(l 3) D6 G1 [अ]भिरक्षिता (for °पालिता) —(l 4) V3 [अ]र्थं (for [अ]र्थे) M3 सती (also) (for [अ]भवत्) B2 रामस्यापरमाभवन् (sic) (for the post half) ‖ Ct त्रिधा निविष्टा कस्यवानरयोयुच्छविभागेन निविष्टा so also Cr m t (Ct further adds त्रिधा निविष्टा त्रिवर्ग्य निविष्टायो) Cg त्रिधा त्रिप्रकारे । कल्पप्रकारेणेति यावत् । वानरगोपुच्छजमङ्कुभेदेन त्रेधेति वा ‖ ]

76 D5 om up to महार्ण in ^a (cf v l 89*) —^b) Ś1 N1 D1-4 8 12 तस्थौ (for हृष्टा) Ñ1 D8 L(ed) वा(D5 च L(ed) वै) हरि (for वानर) —^c) Ś1 N1 D1 4 12 वातवेग B1 °वेगो D6 कम्पवे वा (sic) (for °वेग) Ś1 N V1 3 B D1 4 8 9 12 समुद्(N2 V1 B D9 °द्धू)त (for समाधूत) —^d) Ś2 N V1 3 B D1-4 8 9 12 प्रेक्षमाणा(B1 °णो [sic]) (for पश्यमाना) Ś1 N1 D1-4 8 12 [उ]दधिं (for [अ]र्णवम्)

G 5 74 27
B 6 4 109
L 5 71 2

दूरपारमसंबाधं रक्षोगणनिषेवितम् ।
पश्यन्तो वरुणावासं निषेदुर्हरियूथपाः ॥ ७७

चण्डनक्रग्रहं घोरं क्षपादौ दिवसक्षये ।
चन्द्रोदये समाधूतं प्रतिचन्द्रसमाकुलम् ॥ ७८

चण्डानिलमहाग्राहैः कीर्णं तिमितिमिंगिलैः ।
दीप्तभोगैरिवाकीर्णं भुजंगैर्वरुणालयम् ॥ ७९

अवगाढं महासत्त्वैर्नानाशैलसमाकुलम् ।
दुर्गं दुर्गममार्गं तमगाधमसुरालयम् ॥ ८०

मकरैर्नागभोगैश्च विगाढा वातलोलिताः ।
उत्पेतुश्च निपेतुश्च प्रवृद्धा जलराशयः ॥ ८१

अग्निचूर्णमिवाविद्धं भास्वराम्बुमहोरगम् ।
सुरारिविषयं घोरं पातालविषमं सदा ॥ ८२

---

77 a) T3 दूरापारम् M1 2 दुरापारम्; Cr m g k t as in text (for दूरपारम्) V3 असंवार (for °बाध) — b) Ś1 Ñ V1 2 B D1-4 8 9 10 याद्रो (for रक्षो) — c) Ś1 Ñ V1 3 B D1-4 8 9 10 भ्रमाय (for पश्यन्तो) G3 वारुणावास — d) Ś1 D12 वानरर्षभाः (for हरियूथपाः)

78 a) Ś1 Ñ1 D1-4 8 11 चपन्( D1 2 चपल्, D3 चेद्र, D3 चपम् [sic])मीन, B3 चक्र° (for चण्डनक्र) D10 11 ग्राह (for ग्रहं) — b) B3 क्षरेत (for क्षपादौ) G3 दिन सक्षये Cr m g k t as in text Ś1 D1 2 4 8 11 महानागा (D3 °ग)सुरक्षय, Ñ1 महानादोर्मिसजलं, Ñ2 V1 3 B1 2 4 D3 चर्(V1 B1 क्षरे; V3 रक्षः B2 चसं)त रजनीक्षये, D3 महानादसुराक्षस —After 78ab D1 2 10 11 S ins

90* इह तमिव फर्नौघैर्नृत्यन्तमिव चोर्मिभि ।

[G1 वीचिभि Ct as above (for चोर्मिभि)]

— c) D1 7 M1 2 3 चन्द्रोदय (for °ये) Ñ2 V1 D1 2 T3 समुद्धृत D11 G1 2 M3 समुद्धृतं (for समाधूतं) Ś1 D1 2 10 M1 Ct चन्द्रोदयसमुद्धृत Ñ1 °यमिवोद्धृतं V3 B2 4 D1 4 8 9 T3 °यसमुद्धृत D12 °दयसमुद्धृत — d) Ś1 Ñ2 D1-3 8 11 वियद्विम( Ś1 D12 °द्विव )मिवापर, D4 विनृत्यतमिवापरं —After 78 D3 G3 M3 ins

91* पिनद्धोर बरद्धामिरथय फेनचन्दनम् ।
तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गना ।

79 V3 om (hapl) 79-80b — a) M1 2 ग्राहैः Cv as in text (for ग्राहैः) —For 79ab Ś1 Ñ1 D1 4 8 11 subst

92* चन्द्रपादमहानादं नक्रमीनविलोडितम् ।

[D1 12 माल- (for नादं) D3 नाद्रुने I (ed) विना डितं (for -विलोडितम्)]

while Ñ2 V1 B D3 subst for 79ab

93* चन्द्रपेशं महाशर्वरीनक्रं वह्निविद्याशिभि ।

[Ñ2 V1 B4 हमराह B3 D3 महार्णवं (for °शर्व) Ñ2 V1 B2 4 D3 नानावह्नि (for अनन्तवह्नि)]

— c) Ñ2 D1-4 8 10 भीम M3 दृढैः Cm g k t as in text (for दीप्त) B3 सर्पैरु (for भोगैरु) Ś1 Ñ V1 B D1 4 8 9 10 T3 G3 समाकीर्णं M3 भरा° Cm g t as in text (for इवा°) — d) Ś1 D12 भोगिभिर् (for भुजंगैर्) Ś1 Ñ1 D1 4 8 11 भणिभूषितं, Ñ2 V1 B D3 T3 M1 2 भुजगालयं Cm g k t as in text (for वरुणालयम्)

80 V3 om 80cd (cf v l 79) D3 om (hapl) 80 — a) T3 महाशैलैर् (for °सत्त्वैर्) — b) Ñ V1 B ग्रा (B1 2 ग्र)ह (for शैल) —For 80ab, Ś1 Ñ1 D1-4 8 10 11 subst

94* अवगाढमहाशैलं नदीनद्गताकुलम् ।

[D3 अवगूढ D4 व्याप्तगाढ (sic) D12 °गाढं (for अवगाढ) Ś1 शताकुन D3 गिलज्जले D11 -ज्ञानशिल(sic) (for शताकुलम्)]

— c) V3 च (for तम्) Ś1 दुर्गमगाधेतम्; Ñ2 B3 दुर्गं समावृतम्, D3 दुर्गमार्गमार्गम् (for दुर्गममार्गं तम्) D1-7 10 11 T G M1 2 Cg k t सुदुर्गं(D3 T3 G3 समुद्रं) दुर्गमार्गं तं — d) Ś1 D12 अपारं, Ñ2 अपारं (for अगाधम्) Ś1 Ñ1 B1 2 D1-4 8 11 T3 वरुणालयं V3 B3 D3 T3 मकराश्रयं Cv r as in text (for असुरा°)

81 a) G3 कमठैः; Cg as in text (for मकरैर्) D3 भीमवेगैश्च (for नागभोगैश्च) — b) V3 विगाहः, D3 °ढा (for °ढा) B3 लोलिता (for -लोलिता) Ś1 D1 2 11 विक्र( D3 °भ)द्वैरिव ताडितैः; Ñ1 विनर्दैरिव भाति तैः; Ñ2 B3 D3 स्वनद्भि( B3 स्खलद्भि )रिव( D3 °रभि) ताडिता; B3 विगाढं पवनोद्धता; D1 4 विन(विम)र्द्दैरभि( D3 °रिव)ताडितैः — c) V3 उत्पेतुर् B3 उत्पेतुर्न्ति (for उत्पेतुश्च) M3 प्र (for नि) — d) D10 11 प्रहृष्टा (for प्रवृद्धा) Cg Ck प्रवृद्धाजलराशय इति ... —For 81cd, Ś1 Ñ1 D1 4 8 11 subst

95* वरुणस्य निपात्याग्नि प्रवृत्तं चहरात्रिभि ।

[D3 प्रसन्न D3 तरत्रद्धि पात्रिभि (for the prior half) Ś1 D12 प्रवृत्तं D1 8 प्रवर्ध (for प्रवृत्तं) Ś1 D1 ... रात्रिभि ]

82 a) Ś1 D1 2 11 मद्गे( D3 °प )मग्न; Ñ1 मग्नेवैर्मग्न; Ñ2 V1 3 B1 2 4 अग्निर्पूर्ण( V3 °र्णं )म्नः D1 4 8 मद्गे पूर्णं( D3 °र्णं )म्नः G3 आपूर्णेरत् (for अग्निपूर्णम्) B3 D3 [आ]विद्धं; D3 [आ] बद्धं (for [आ]विद्धं) — b) Ś1 D1 4 8 11 भानु( D1 4 11 °स्व )रं मुमत्तोद्रं — c) T3 सुरारि; Cv r m g as in text (for °रि) Ñ2 D1 2 4 8 11 विषय (for विषयं) D3 भीमं (for घोरं)

सागरं चाम्बरप्रख्यमम्बरं सागरोपमम् ।
सागरं चाम्बरं चेति निर्विशेषमदृश्यत ॥ ८३

संपृक्तं नभसा ह्यम्भः संपृक्तं च नभोऽम्भसा ।
तादृग्रूपे स्म दृश्येते तारारत्नसमाकुले ॥ ८४

समुत्पतितमेघस्य वीचिमालाकुलस्य च ।
विशेषो न द्वयोरासीत्सागरस्याम्बरस्य च ॥ ८५

अन्योन्यैराहताः सक्ताः सस्वनुर्भीमनिःस्वनाः ।
ऊर्मयः सिन्धुराजस्य महाभेर्य इवाहवे ॥ ८६

रत्नौघजलसंनादं विषक्तमिव वायुना ।
उत्पतन्तमिव क्रुद्धं यादोगणसमाकुलम् ॥ ८७

ददृशुस्ते महात्मानो वाताहतजलाशयम् ।
अनिलोद्धूतमाकाशे प्रवल्गन्तमिवोर्मिभिः ।
भ्रान्तोर्मिजलसंनादं प्रलोलमिव सागरम् ॥ ८८

G. B. L.

इति श्रीरामायणे युद्धकाण्डे चतुर्थः सर्गः ॥ ४ ॥

---

Ś1 D2 3 12 सुराणा निलय भीम, D1 असुरानिलयतश्च (sic), D4 असुराणा क्षय भीम —d) Ś1 Ñ1 D6 8 12 पाताले (D6 °ले) (for °क) V1 2 D2 4 7 9-11 T2 3 G1 Ck t विपय (V3 °यम्), M6 विवर, Cv g as in text (for विषम) Ś1 D13 यथा, Ñ1 V1 B4 D1 तथा, Ñ2 V3 B1-3 D3-4 5 9 तदा (for सदा) ※ Cm पातालविषयमिति पाठ ※

83 a) Ñ2 V3 B D9 हि, V2 D7 तु (for च) V3 [अ]सुर (for [अ]म्बर) —c) Ñ2 V1 2 B D9 अंबर सागरश्चोभौ ※ Cv सागरमिति नपुंसकलिङ्गप्रयोगनिपातेन ।, Cr m सागरमिति लिङ्गव्यत्यय आर्षः ।, so also Cg ※ —d) Ñ2 V1 B2 4 D9 G1 अदृश्यता (B4 D9 G3 °ते), V1 अपश्यता —For 83 Ś1 Ñ1 D1-4 5 12 subst

96* अम्बर सागरप्रख्य सागर चाम्बरोपमम् ।
सागरश्चाम्बर चोभे निर्विशेषे बभूवतु ।

[(l 1) Ś1 Ñ1 D12 सागरश्चांबरोपम (for the post half) —(l 2) D2-4 5 सागर (for °रम्) Ś1 Ñ2 [अं]बरम् (for °र) D3 निर्विशेषौ ]

84 a) Ś1 [अं]भश्च, Ñ1 D3 7 10 11 T2 G1 2 M [अ]म्भस , Cv r m g as in text (for ह्यम्भ) —b) D5 चाम्भसा नभ (by transp) D8 नभसोंभसा (sic) (for च नभोऽम्भसा) —For 84ab, Ñ2 V1 2 B D9 subst

97* संयुक्तमम्भसा ह्यभ्र युक्त च नभसा अर्णम् ।

[V1 2 B3 सपृक्तम् (for °युक्तम्) V3 च (for हि) Ñ2 V1 B3 D9 पृक्त च, V3 एक्त (sic) (for युक्त च) ]

—c) Ś1 Ñ1 D1-4 5 12 G2 तुल्यरूपे, V1 ईदृग्रूपे, D5 तादृग्रूपे, T3 अनुरूपम्, Cv r m g t as in text (for तादृग्रूपे) D1 5 12 दृश्यते (for दृश्येते) Ś1 Ñ1 प्रदृश्येते, B2 सु°, B3 4 ध्व°, T3 अद°; G3 [s]द°, M1 2 तु द°, Cv m g as in text (for स्म द°) —d) Ś1 N1 D1 3 4 5 12 नागारत्न (for तारारत्न )

85 a) V1 2 G3 M1 2 समुत्पतति (sic) B3 D9 मत्स्यस्य D2 3 नोयस्य T2 फेनस्य (for मेघस्य) Ś1 Ñ1 D1 2 4 12 समुत्पत(D1 °त)ति तो(Ś1 Ñ1 यो)यस्य (sic) Ñ2 समुत्पतति (sic) मत्स्यस्य —b) Ś1 N V1 2 B D1-3 8 9 12 मेघमाल (for वीचिमाला ) —c) Ś1 N1 D1 3 4 5 तयोर्, D3 [ए]तयोर्, D8 12 [उ]भयोर् (for द्वयोर्)

86 D7 om 86 87 —a) Ñ2 B2 D3 8 9 T2 3 M Cg अन्योन्यम्, Cm t as in text (for अन्योन्यैर्) Ñ1 D2-4 5 तत्र, Ñ2 V1 B D9 सत (for सक्ता ) Ś1 D12 अन्योन्येनाहतास्तत्र, V3 अन्याश्चैवाहता सत —b) Ñ2 D9 सस्वुर्, D7 M6 सस्वर, D12 सस्वद (sic) (for सस्वनुर्) Ś1 B3 D8 12 त्रिकमा T2 स्वय भीमपराक्रमा —c) D3 वीचय (for ऊर्मय ) Ś1 Ñ1 D2 4 5 12 अंबुवेगा समुद्रस्य —d) Ś1 Ñ V1 2 B D2-4 5 9 12 [आ]हता, D10 11 [अ]गेरे (for [आ]हवे).

87 D2 om 87 (cf 1 1 86) —a) V3 रत्नौघैर्, G(ed) रत्नौध (for रत्नौघ ) Ś1 Ñ1 D2-4 5 12 सन्निभ, Ñ2 B2 D9 -सपक्षा, V1 2 B1 4 समारैर् (for सनाद ) —b) Ś1 D12 विभक्तम्, Ñ2 B2 D9 जीमूता, V3 B1 D3 4 विमुक्तम्, B3 4 नियुक्तम् (for विषक्तम्) —c) Ś1 Ñ1 D2-4 5 12 [आ]काशे, B3 [आ]क्रुद्ध (for क्रुद्ध) —d) Ś1 Ñ1 D2-4 5 12 रत्नौघव्रातसंकुल, B3 यादोभि सुमहा°

88 a) Ñ2 V1 2 B D9 अपश्यस् (for ददृशुस्) Ś1 Ñ1 D1 3 5 12 महानाद Ñ2 V1 B D9 °त्मान, M3 महोत्साहा (for महात्मानो) —b) Ś1 N1 D12 वाताहति, Cr m g as in text (for वाताहत ) Ś1 D1-4 5 12 -समाकुल, Cm g k t as in text (for जलाशयम्) D6 T1 वाताहतमपा पतिं —Ś1 Ñ1 D1-4 5 12 read 88cd after 65 —c) D3 5 11 G3 [उ]द्धृतम्, Cm g as in text (for [उ]द्धूतम्) B2 D1-3 8 9 आकाश (for °शे) —d) Ś1 Ñ2 D12 व्यवस्थितम्, Ñ2 V1 B3 प्रवृद्धतम्, V3 D1 3 7 9 प्रवल्गातम् (sic) D2 3 प्रचलितम्, D4 प्रवर्धितम्, D6 प्लवगतम् (sic) D8 प्रवालितम्, D10 11 T1 प्रल्पतम्, G1 प्रवर्ततम्, Cg as in text (for प्रवल्गन्तम्) —After 88cd, Ñ2 V3 B D6-7 9-11 S ins

98* ततो विस्मयमापन्ना ददृशुर्हरयस्तदा ।

[D10 11 हरयो ददृशु (by transp) D10 11 G1 2 M1 2 स्थिता (for तदा) ]

तन्मे दहति गात्राणि विषं पीतमिवाशये ।
हा नाथेति प्रिया सा मां ह्रियमाणा यदब्रवीत् ॥ ७
तद्वियोगेन्धनवता तच्चिन्ताविपुलार्चिषा ।
रात्रिंदिवं शरीरं मे दह्यते मदनाग्निना ॥ ८
अवगाह्यार्णवं स्वप्स्ये सौमित्रे भवता विना ।
कथंचित्प्रज्वलन्कामः समासुप्तं जले दहेत् ॥ ९
बह्वेतत्कामयानस्य शक्यमेतेन जीवितुम् ।
यदहं सा च वामोरूरेकां धरणिमाश्रितौ ॥ १०

केदारस्येव केदारः सोदकस्य निरूदकः ।
उपस्नेहेन जीवामि जीवन्तीं यच्छृणोमि ताम् ॥ ११
कदा नु खलु सुश्रोणीं शतपत्रायतेक्षणाम् ।
निर्जित्य शत्रून्द्रक्ष्यामि सीतां स्फीतामिव श्रियम् ॥ १२
कदा नु चारुबिम्बोष्ठं तस्याः पद्ममिवाननम् ।
ईषदुन्नम्य पास्यामि रसायनमिवातुरः ॥ १३
तौ तस्याः संहतौ पीनौ स्तनौ तालफलोपमौ ।
कदा नु खलु सोत्कम्पौ हसन्त्या मां भजिष्यतः ॥ १४

G
B
L

7 [b]) Ś1 Ñ1 D1-4 8 12 [आ]तपे (for [आ]शये) Ñ2 V1 3 B D9 विसर्पित इवानल, G3 विषयुक्तमिवाशन —[cd]) G1 प्रिय (for प्रिया) G2 transp सा and मा Ś1 Ñ1 D1-4 8 12 महास्वनेति यन्मा सा (for [c]) M2 ह्रीय-माणा (for ह्रियमाणा) Ś1 D3 8 12 वचोऽब्रवीत्, Ñ2 [अ]ब्रवीद्वच (for यदब्रवीत्) D2 3 4 रुदती (D1 रुदती) वाक्यमब्रवीत् (for [d]) Ñ2 V1 3 B D9 महास्वना (V1 °स्वा, B1 °नाद) प्रिया यन्मे करुण पर्यदेवयत्

8 Ñ2 V1 3 B D9 read 8-9 after 5 —[a]) Ś1 Ñ1 D1 3 4 12 तद्वियोगसमुत्थेन —[b]) D2 तापेन (for तच्चिन्ता), Ś1 D12 ज्वलितेन च B3 D10 11 T1 2 विमलार्चिषा, L (ed) ज्वलनेन च (for विपुलार्चिषा) —[c]) Ś1 D12 दिवारात्रं, B3 D1 4 8 रात्रिदिनं, L (ed) रात्रौ दिवा ※ Cr रात्रिंदिवम्। अचतुरेत्यादिनिपातनाद्रात्रिंदिवशब्द साधु । so also Cg k t ※ —[d]) B2 च यदग्निना, D5 इवनाग्निना (sic) (for मदनाग्निना)

9 Ñ2 V1 3 B D9 read 8 9 after 5 —[a]) V3 सुप्तो (for स्वप्स्ये) —[b]) Ñ2 V1 3 B2-4 D9 मैथिली, M1 2 [ऽ]ह तया Cg k t as in text (for भवता) Ś1 D1-3 8 12 [ऽ]वहितो भव (for भवता विना) —[c]) Ñ2 D9 कथ (D9 **) चि, B1 D10 11 एव च Cg k t as in text (for कथंचित्) B1 D2-4 प्रज्वलेत्, D1 प्रहरेत् (for प्रज्वलन्) —[d]) Ś1 Ñ V1 B3 D1 10-12 T2 3 Ch t न मा (T1 मा) सुप्त, V2 B1 D1-3 8 G2 3 Cr m g स मा सुप्त (B1 D1 3 4 °प्त), M1 2 समासन्न (for समासुप्त) Ñ1 विनिद्र, D2 3 4 वने (for जले) B2 जले सुप्तं न मां दहेत् ※ Cv सुप्ते वने दहेदिति क्वचित्कोशेषु पाठः, Cr m कथंचित्प्रज्वलन्काम स मा सुप्ते वने दहेदिति पाठे वने सुप्ते सति कथंचित्प्रज्वलन्काम स मा दहेत्, स कामस्तत्र न बाधिष्यते ※

10 [a]) V2 सर्वं तत् (for बह्व°) B1 (marg also as in text) कामयानस्य (for °यानस्य) —[b]) T2 Cv एकेन, Cr m g k t as in text (for एतेन) Ś1 Ñ V1 B D1 3 4 8 12 मैतद्दृश्यं (V1 °र्थं) रिपावत —[c]) V2 तद् (for यद्) B3 कदा D1 एका (for अहं) Ñ2 V1 2 B1-4 D9 सुश्रोणी (for वामोरूर्) —[d]) D1 एना (for एकां) D1 2 आश्रिता Ñ2 V1 3 B1-4 D9 धरणीमाश्रितावुभौ

11 [b]) Ś1 D2-4 12 [इ]व निर्जल (for निरूदक) Ñ V1 2 B D1 1 सज (D3 °लि) लस्येव निर्जल (Ñ1 °ल), T2 सोदरस्य विमादक ※ Cr m g निरूदक निरुदक (Cr दीर्घं भाषे) ※ —[c]) Ś1 Ñ1 D1-4 8 12 उपस्वेदे (D4 °देशे) न T2 भाषन्ते हि न, Cv as in text (for उपस्नेहेन) B2 वैदेह्या (for जीवामि) —[d]) V3 जीवित (sic), D3 4 8 11 12 T1 जीवती Cg k as in text (for जीवन्तीं) D1 T2 हि (for यच्) Ś1 Ñ1 D12 तां शृणोमि यत् (by transp)

12 Ñ1 V3 B D9 read 12 and 20 after 16 —[a]) Ś1 D12 वैदेहीं (for सुश्रोणीं) —[b]) Ñ2 V3 B पद्म, D9 भाग (for शत) Ś1 Ñ1 D1-4 8 12 पूर्णचन्द्र (Ś1 D12 शतपत्र) निभाननाः V1 D7 9 M1 2 3 पद्म (M1 2 शत) पत्र निभेक्षणां —[c]) G2 निहत्य (for निर्जित्य) B2 D8 T1 2 पश्यामि, D1 जीवामि (for द्रक्ष्यामि) —After 12 Ś1 D12 read 20

13 T1 mostly damaged for [a]—[c]) Ñ V3 D9 10 11 T2 सु, G1 om (for नु) Ś1 Ñ V1 B D2 8-11 G1 दतो (L (ed) °तौ) ष्ठ D12 दतौष्ठं (for बिम्बोष्ठं) D1 3 4 कदा स्वद सुदन्तौष्ठं —[b]) Ś1 Ñ2 V1 3 B D2 8 12 तस्या पद्मनिभं मुख (B1 °इव रथ) Ñ2 D1 3 4 सुदं पद्मनिभे (D1 °दृशे) क्षण D3 तस्या पद्मनिभाननं —[c]) Ś1 Ñ V1 3 B3 D1-4 8 10 12 उन्नाम्य (for उन्नम्य) B4 D1 4 पश्यामि (for पास्यामि) D12 समुन्नाम्य प्रपास्यामि —[d]) Ś1 Ñ V1 B D1 4 8 9 11 G2 M2 [उ]त्तमः V3 [उ]द्दिर (for [आ]तुर)

14 Ñ2 V B D9 om 14 —[a]) Ñ1 D1-4 8 तौ चास्या D1 T1 G2 M2 तस्यास्तु (for तौ तस्याः) D8 10 11 G1 2 संहितौ, Cm g as in text (for संहतौ) —[b]) D2 स्तौ, G2 स्तनौ (for स्तनौ) —[c]) Ś1 D12 T2 3 सोत्कण्ठौ (for सोत्कम्पौ) —[d]) D1 संहस, D9 M2 स्मयन्त्याः T2 3 स्मितयन्तौ (T1 °स्या) (for हसन्त्या) Ś1 Ñ1 D1-4 8 12 से (D1 सं) भविष्यत (for मां भजिष्यतः).

G 5 75 13
N 6 5 35
I 5 75 16

सा नूनमसितापाङ्गी रक्षोमध्यगता सती ।
मन्नाथा नाथहीनेव त्रातारं नाधिगच्छति ॥ १५
कदा विक्षोभ्य रक्षांसि सा विधूयोत्पतिष्यति ।
विधूय जलदान्नीलाञ्शशिलेखा शरत्स्विव ॥ १६
स्वभावतनुका नूनं शोकेनानशनेन च ।
भूयस्तनुतरा सीता देशकालविपर्ययात् ॥ १७
कदा नु राक्षसेन्द्रस्य निधायोरसि सायकान् ।
सीतां प्रत्याहरिष्यामि शोकमुत्सृज्य मानसम् ॥ १८
कदा नु खलु मां साध्वी सीतामरसुतोपमा ।
सोत्कण्ठा कण्ठमालम्ब्य मोक्ष्यत्यानन्दजं जलम् ॥ १९
कदा शोकमिमं घोरं मैथिलीविप्रयोगजम् ।
सहसा विप्रमोक्ष्यामि वासः शुक्लेतरं यथा ॥ २०
एवं विलपतस्तस्य तत्र रामस्य धीमतः ।
दिनक्षयान्मन्दवपुर्भास्करोऽस्तमुपागमत् ॥ २१

15 Ñ1 D1-4 8 read 15 after 19 —a) T1 2 G M1 2 3 असितापाङ्गा —b) Ś1 Ñ1 D1 राक्षसीमध्यगा स्थिता, Ñ2 V1 3 B D6 राक्षसीमध्यगा प्रिया, D1-4 8 राक्षसीमध्य(D8 °मध्य)गा शुभा —c) Ś1 V1 D5 T2 सनाथा, V2 D1 अनाथा (for मन्नाथा) D5 मन्नाथहीना भर्तारं —d) D5 भर्तारं (for त्रातारं) —After 15, D5-7 10.11 S ins

101* कथं जनकराजस्य दुहिता च मम प्रिया।
राक्षसीमध्यगा शेते स्नुषा दशरथस्य च।

[(l 1) D7 10 11 G1 मम च (by transp), G3 M1 परम, M3 सा मम (for च मम) —(l 2) D6 T1 2 G1 सा (for च)]

16 a) Ñ2 V1 3 B D6 [अ]वधूय, D8 विधूय (for विक्षोभ्य) Ś1 Ñ1 D1-4 11 कदा वि(D8 °दाव)धूय रक्षांसि च, D10 11 Ct अविक्षोभ्याणि रक्षांसि ⊕ Ct m g अवि(Ct वि)-क्षोभ्यरक्षांसीत्येकं पदम् ⊕ —b) Ś1 Ñ V1 3 B D1-4 8 11 सा धूय; M1 3 4 सहसैव (for सा विधूय) Ś1 D11 आपति-ष्यति, Ñ1 मा वदिष्यति (for [उ]त्पतिष्यति) —c) Ñ2 V1 3 B D6 निर्भिद्य (for विधूय) Ś1 D11 जलदापूर्णं, Ñ V2 3 B D1-4 8 जलदं नीलं —d) G1 चन्द्र (for शशि), D4 6 T2 3 G1 3 M1 रेखा (for लेखा) Ñ1 D1-4 8 यथा(D4 [with hiatus]) 6 इवा [यदि] (for शरत्स्विव) Ś1 Ñ2 V1 3 B D7 8 11 शशिरे(V1 D1 3 शशिरे)खेव जानकी(Ś1 D11 निर्मला; D7 शारदी) —After 16, Ñ1 V2 B D6 read 12 and 20

17 a) Ś1 V1 2 B D3 8 11 स्वभावात्तनु(D8 °का)स्वयं Ñ1 D1 2 4 स्वभावेन तनुर्नू(D1 °नु नू)नं, D7 स्वभावात्तु कृशा नूनं —b) Ñ2 मदनेन (for [अ]नशनेन) L (ed) तु (for च) —c) V3 तनुदेह (for °तरा) Ś1 Ñ2 V1 B1 2 D1-4 8 11 जाता Ñ2 दृष्टा, V3 B3 4 [आ]याता (for सीता) —d) Ś1 Ñ1 D1-4 11 मम भावाय; L (ed) मदभावाय (for देशकाल) Ñ2 V1 2 B1 3 4 D6 दशभाग्य (B4 दशभाग)विपर्यये(V2 °यात्) —After 17 Ś1 Ñ2 V1 D1-4 8 11 ins.

102* मा प्रकृत्यैव तन्वङ्गी मद्वियोगाच्च कर्शिता।
प्रतनुत्वमनाश्लिष्य दिदीपे वपुषा गता।

[(l 1) Ś1 V3 D11 मदिरेक्षणा Ś1 V3 वसिता —(l 2) D11 शुक्लस्य (for शीलस्य)]

18 a) D3 च, D5 6 तु (for नु) —b) D1 निधेय (sic) D5 7 विधाय, G3 निखाय (for निधाय) Ś1 (after corr as in D11) मार्गण, D11 सायक (for सायकान्) —c) B4 D10 11 शोक (for सीतां) Ñ V1 3 B D1 4 6 M1 3 प्रत्यानयिष्यामि, Cm g t as in text (for °हरिष्यामि) —d) Ś1 Ñ2 D1-4 8 11 विशोक (D1 4 °कां) शोकनाशिनीं, Ñ2 V1 3 B D6 शोकवेगपरिप्लुतां ⊕ Cm सीतां प्रत्याहृत्य कदा नु शोकमुत्सक्ष्यामीत्यर्थं । एतत् मुखं प्रत्याहृत्य इत्यपि तीतिवदपूर्वकालेऽपि क्त्वाप्रत्यय साधुः ॥ so also Cg t ⊕

19 Ñ1 V1 B D6 om 19 —a) Ś1 M1 सा D1 10 11 से, D12 M1 2 मा (for मां) Ś1 Ñ1 D1-4 8 11 सीता (for साध्वी) —b) D4 7 T M सुर (for [अ]मर) Ś1 Ñ1 D1-4 8 11 साध्वी(Ś1 D11 सा)सर्वाङ्गशोभना —c) D4 G1 सोत्कण्ठं D4 6 आलिङ्ग्य (for आलम्ब्य) Ñ1 गाढं सोत्कण्ठ मालम्ब्य —After c, D4 reads 20c–21a —d) D4 6 T G M1 वध (for जलम्)

—After 19 Ñ1 D1-4 8 read 15

20 For sequence in Ñ2 V1 B D6 cf v l 12 Ś1 D11 read 20 after 12 —b) B4 विप्रयोगितां D1 विप्रयोगकं —D4 reads (erroneously) 20c–21a after 19c —d) D6 इस (for वास)

21 D4 reads 20c–21a after 19c.—ab) B4 विलपते Ś1 Ñ1 D1 2 4 6 11 विल्प(Ś1 °ल्प)मानस्य B2 4 D6 M1 2 तत्र तस्य (by transp) ⊕ Ct g विलपन् विलपति सति ॥ Cm विलपत सत ॥ Ct विलपतो रामस्य विलापं कुर्वत्यर्थे, ⊕ Ś1 Ñ1 D1 2 11 राघवस्य महात्मनः ; D1 2 4 रामस्य धुमतो(D6 विदितो)रमन (for b) —c) Ñ B1 D6 रविरम्यः D5 T1 M1 रविद् (for वपुर्) —d) Ś1 Ñ V2 B1 2 D7 10 11 G1 2 उपागमत् (Ś1 D11 °दपौ; G1 °गिरम्) (for उपागमत्)

आश्वासितो लक्ष्मणेन रामः संध्यामुपासत । स्मरन्कमलपत्राक्षीं सीतां शोकाकुलीकृतः ॥ २२

इति श्रीरामायणे युद्धकाण्डे पञ्चमः सर्गः ॥ ५ ॥

22 Ñ1 D4 om 22 —^d) T1 G3 Cm^p उपागमत्, M1 2 उपाविशत्, Cr m g as above (for उपासत) —T2 3 G1 M1 2 om 22^cd. D6 reads ^cd after 3^ab. —^d) D6 कृता (for कृत) ⊛ Cr उपासत उपास्ते। एकारप्रत्यय आर्षः। उपागमत् इति पाठः।, Cm स्मरन्निति हेतौ शतृप्रत्ययः। सीतास्मरणादतो शोकाकुलीकृतो रामो लक्ष्मणेनाश्वासित संध्यामुपासत।, so also Cg t ⊛ —For 22, Ś1 Ñ2 V1 2 B D1-3 5 6 12 subst

103* इति स दयितया विनाकृत
सुरपतितुल्यपराक्रमेश्वर।
एवमभ्युदीक्ष्य दुष्करं
जनकनरेन्द्रसुतामचिन्तयत्।

[(l 1) Ś1 D1 2 3 12 वनितया V3 B3 दयिता, D1 तेन सता (for दयितया). V3 विनाकृत सन्, D1 1 विनाकृत, D2 विनात दुःखी (for विनाकृत) —(l 2) B1 वने (for -पत्ति) D1 -पराक्रमैः; D2 -बुध्द सम्बुधेन (for -बुधेश्वर) —(l 3) B1 D1 1 अवेक्ष्य (for वरेक्ष्य) B3 स दुस्तरं, B1 स्वरं, B1 प्रस्तर (for दुस्तर) —(l 4) D1 -नृप (for -नरेन्द्र-). Ś1 D1 3 12 अन्वेषत्, B1 अतिचिन्तयत्, D1 च शोचयन्, D2 भृशो शुशोच (for अचिन्तयत्).]

Colophon —*Kanda name*: Ñ V1 2 B D1-4 8 9 12 सुन्दरकाण्डे —*Sarga name*: Ś1 D1 2 समुद्रतीरगमनं, Ñ1 रामप्रलाप; Ñ2 B1-4 वैन्यावनविलाप (B2 °निवास); V1 रामविरहवेदना: V2 उद्योगे वेलावननिवास; B1 सागरविक्षेक निवासविलाप; D1 1 रामविलाप; D1 4 रामपरिदेवन; D1 वनविलाप —*Sarga no* (figures, words or both) Ś1 Ñ1 B3 D1 3 4 6 12 om, Ñ2 D9 78, V1 74, V2 66, B1 77, B1 69 B4 80 D2 81, D5-7 10 11 S 5 (as in text) —After colophon, D3 concludes with समाप्तम् उद्योगपर्वणि द्विशतपर्वा समाप्तोय सुन्दरकाण्ड; D12 with समाप्तमुद्योगपर्वं द्विशतपश्च, G M1 2 with श्रीरामाय नमः, M2 with श्रीरामचन्द्राय नमः. —Thereafter Ś1 Ñ V1 2 B D1-4 8 9 12 ins a passage relegated to App I (No 1) and then read Sarga 10.

६

G 5 77 1
B 6 6 1
L 5 77 1

लङ्कायां तु कृतं कर्म घोरं दृष्ट्वा भयावहम् ।
राक्षसेन्द्रो हनुमता शक्रेणेव महात्मना ।
अब्रवीद्राक्षसान्सर्वान्ह्रिया किंचिदवाङ्मुखः ॥ १
धर्षिता च प्रविष्टा च लङ्का दुष्प्रसहा पुरी ।
तेन वानरमात्रेण दृष्टा सीता च जानकी ॥ २
प्रासादो धर्षितश्चैत्यः प्रवरा राक्षसा हताः ।
आविला च पुरी लङ्का सर्वा हनुमता कृता ॥ ३
किं करिष्यामि भद्रं वः किं वा युक्तमनन्तरम् ।
उच्यतां नः समर्थं यत्कृतं च सुकृतं भवेत् ॥ ४
मन्त्रमूलं हि विजयं प्राहुरार्या मनस्विनः ।
तस्माद्वै रोचये मन्त्रं रामं प्रति महाबलाः ॥ ५
त्रिविधाः पुरुषा लोके उत्तमाधममध्यमाः ।
तेषां तु समवेतानां गुणदोषं वदाम्यहम् ॥ ६

6

☞ Cv is missing for Sarga 6 (Folio damaged)

1 ᵃ) D1 1 1 लंकायाम् (for लङ्कायां) Ś1 Ñ1 B1 4 D1-4 8 11 तत् (for तु) Ś1 D13 श्रुत्वा N1 D1 4 8 दृष्ट्वा D2 सर्वं (for कर्म) —ᵇ) Ś1 Ñ1 D1-4 8 11 घोरं( Ś1 °र) कर्म Ñ2 V1 3 B D6 दृष्ट्वा घोरं (by transp ) (for घोरं दृष्ट्वा) —ᶜ) G3 महातेजा Cm k t as in text (for हनुमता) —ᵈ) B3 शक्रणैव G3 वानरेण Cm g k as in text (for शक्रेणेव) Ś1 Ñ1 D1 4 8 11 श्लाघनीय सु( Ñ1 स )दुस्तरः V1 3 सम्भ्रमाविष्टचेतन L(ed ) समुद्वेद्रियमानस ✣ Cg शक्रेणेव शक्रतुल्येन । ' इवेन सह नित्यसमासो विभक्त्यलोप पूर्वपदप्रकृतिस्वरत्व च वक्तव्यम् ' इति विभक्त्यलोप ✣ —For 1ᶜᵈ Ś1 N V1 3 B D1-4 8 9 11 subst

104* अमात्यानब्रवीत्सर्वान्राक्षसान्सविभीषणान् ।
रोषसरक्तनयन कोपात्किंचिदवाङ्मुख ।

[ (l 1) Ś1 D13 वीरो (for सर्वान्) Ñ1 भीमविक्रमान् (for सविभीषणान्) D3 राक्षस सविभीषण (for the post half) —(l 2) Ś1 Ñ1 D13 संरक्तघोर , D1 4 8 संरम्भ (D1 °म्भो )रक्त (for रोषसरक्त ) D3 संरक्तनयन कोपात् (for the prior half) D1 क्रोधात् (for कोपात्) ]

—Thereafter Ś1 Ñ V1 3 B4 D1 4 8 9 11 cont 106*

2 For 2ᵃᵇ Ś1 Ñ V1 3 B4 D1-4 8 9 11 subst

105* धर्षितेयं पुरी लङ्का दुष्प्रवेशा सुरैरपि ।

[ D13 दर्शिता (for धर्षित) B4 दुष्प्रधर्षा D1 दुराधर्षा D3 4 दुष्प्रवेश्या (for दुष्प्रवेशा) ]

—ᵈ) Ś1 Ñ V1 3 B4 D1 4 8 9 11 प्राकृतेन हु( B4 सु )बुद्धिना —For 2 B1-3 subst while Ś1 N V1 3 B4 D1-4 8 11 cont after 104*

106* आगत्य प्रविश्य हनुमत्काकुत्स्थस्यमाम् ।
दृष्टा सन च वैदेही प्रविश्यास्य पुरं मम ।

[ (l 1) V1 आगत्य (for आगत्य) —After l 1, Ś1 Ñ1 D1-4 8 11 ins. while V3 3 ins after 3

106(A)* [illegible] ।

[ V1 भर्त्सनाम् (for मन्त्र°) N1 D1 मन्त्रवित D1 बुद्धिर्बुधा (for मम पत्रितम्) ]

—(l 2) Ś1 Ñ1 V1 D13 हि (for च) B1 D1 4 प्रदृश्य (for प्रविश्य) Ñ1 B1 4 D4 महत् (for मम)

3 ᵃ) D13 प्रासादे G3 प्रासादो Cg as in text (for प्रासादो) Ś1 देश (for चैत्य ) Ñ1 B D1 प्रासादशिखरं भग्न D1 प्रासादधर्षितश्रेष्ठा —D1 om 3ᶜᵈ —ᶜ) Ś1 Ñ V1 3 B D1 1 1-4 8 G M1 3 आकुला T1 दीपिता Cg k t as in text (for आविला) —ᵈ) T1 damaged for सर्वा —After 3 V1 3 ins 106(A)*

4 ᵃ) M1 3 करिष्यामः Cm g k t as in text (for °मि) Ś1 Ñ V1 3 B D1-4 8 9 11 किं करिष्यामहे( V1 D1 °ष्यइ ) तत्र —ᵇ) T1 को, Cm g k t as in text (for किं) D13 11 यो (for वा) Ś1 D13 L (ed ) विधानं युक्तमुत्तरं (L[ed ])°म ) —ᶜ) B3 उच्यते D1 T1 G1 च Cm g k t as in text (for यत्) Ś1 Ñ V1 D D1 1 1 1 transp न and यत् V3 उच्यतां यत्समुत्पन्नं —D1 om 4ᵈ–5ᵃ —ᵈ) Ś1 N1 V3 3 B1 3 4 D1-4 8 11 किमत्र D1 T1 G1 यत्कृतं T1 कृत्यं च G1 कृत तु Cl t as in text (for कृत च) T1 सुमहद् Cg k t as in text (for सुकृत) N1 B1 D1 किं वा युक्ततरं भवेत्

5 D1 om 5ᵃᵇ (cf v l 4) —ᵃ) D1 8 11 वा M1 3 om (subm ) (for हि) D1 विशेषं D1 निश्चयं M1 3 कार्यं (for विजयं) —ᵇ) V1 D1 10 प्रवदन्ति D13 प्रवदन्ति च (hypm ) (for प्राहुरार्या) V3 B3 M1 3 मनीषिण : Ck t as in text (for मनस्विन ) Ś1 D13 प्राहुर्विजय कांक्षिण —ᶜ) G1 त [illegible] (for तस्माद्वै) G1 रोचतां M1 रोचयेन् (for रोचये) Ś1 N1 V3 B1-3 D1-4 8 11 G (ed ) तस्माद्वो( D1 °द्वै D1 °द्वा )रोच( G [ed ]°च्य )तां मंत्रो B1 तस्मात्मे रोचतां मंत्रो

6 ᵃ) T1 पुरुषा (for त्रिविधा ) —All MSS record hiatus between ᵃ and ᵇ —ᶜ) Ś1 Ñ V1 3 B1 D1-4 8 11 च (for तु) —ᵈ) Ś1 Ñ V1 3 B1 3 4 D1 4 8 9 11 गुणदोषान् B1 D1 11 T1 G1 M1 Cm g k t °दोषौ (for गुणदोषं)

मन्त्रिभिर्हितसंयुक्तैः समर्थैर्मन्त्रनिर्णये ।
मित्रैर्वापि समानार्थैर्बान्धवैरपि वा हितैः ॥ ७
सहितो मन्त्रयित्वा यः कर्मारम्भान्प्रवर्तयेत् ।
दैवे च कुरुते यत्नं तमाहुः पुरुषोत्तमम् ॥ ८
एकोऽर्थं विमृशेदेको धर्मे प्रकुरुते मनः ।
एकः कार्याणि कुरुते तमाहुर्मध्यमं नरम् ॥ ९
गुणदोषानिश्चित्य त्यक्त्वा दैवव्यपाश्रयम् ।
करिष्यामीति यः कार्यमुपेक्षेत्स नराधमः ॥ १०
यथेमे पुरुषा नित्यमुत्तमाधममध्यमाः ।
एवं मन्त्रोऽपि विज्ञेय उत्तमाधममध्यमः ॥ ११
ऐकमत्यमुपागम्य शास्त्रदृष्टेन चक्षुषा ।
मन्त्रिणो यत्र निरतास्तमाहुर्मन्त्रमुत्तमम् ॥ १२
बह्व्योऽपि मतयो गत्वा मन्त्रिणो ह्यर्थनिर्णये ।
पुनर्यत्रैकतां प्राप्तः स मन्त्रो मध्यमः स्मृतः ॥ १३

G B L

7 $^{a}$) D8 मन्त्र, D9 om (for हित) D5 °युक्तै (for संयुक्तै) Ñ2 B2 मन्त्रि(B2 मन्धि [sic])त मन्त्रिभि र्युक्तै, B1.3.4 मन्त्रिभिर्मन्त्रित युक्तै, D10.11 Ck t मन्त्रभिर्हितै संयुक्त. —$^{b}$) D2 समर्थैर्, D4 समर्थे, L(ed) समेतैर् (for समर्थैर्). B4 मन्त्रि, D2 हित (for मन्त्र) Ś1 Ñ V1.2 B1–3 D1.3.4.6 निश्चये, B4 D5.8.12 निश्चये, D6 निर्णये (for निर्णये) —$^{c}$) D2.4 च (for वा) Ś1 D12 L(ed) क्षमार्थैर्वा समेतार्थैर्(L [ed] °स्थार्थैः) —$^{d}$) Ñ1 M5 वापि (for अपि) D10.11 Ct [अ]थिकैः (for हितैः) Ñ2 V1.2 B D9 वा हितै रतैः, D5 T2.3 चापि सहितैः, D7 G2 वा समाहितैः (for अपि वा हितैः) —For 7$^{cd}$, D2.3 subst, while D3.4 ins after 7$^{ab}$

107* मन्त्रयेत सदा राजा समानार्थं कुलोद्गतैः ।

[ D6 मित्रैर्वापि (for मन्त्रयेत) D2 कार्यार्थे D3 समानार्थे (for समानार्थं) D3 कुलोद्भवैः ]

8 $^{a}$) Ś1 D12 सु(D12 स)मन्त्र, Ñ1 यत्नैव, Ñ2 V3 D2.3.9 सहृता, D4 सहचर (for सहितो) Ñ1 मन्त्रयित्वा तु, D6 T2 °युक्तो य, D9 °येन्मन्त्र (for मन्त्रयित्वा य) V3 B सह समन्य यो मन्त्रैः D1.3 सह समन्य च सहि (D1 सहितैर्) —$^{b}$) Ś1 B2.3 D12 कार्यारम्भे, Ñ1 V1.2 B1.4 D1.3.4.5 कर्मारम्भे(Ñ1 °भ ; B1.4 °भ), D8 कामारम्भे (for कर्मारम्भान्) Ś1 Ñ V2 B1–3 D1.3.4.5.9.12 T3 प्रवर्तते, Ct as in text (for °येत्) D2 कर्मारम्भेषु वर्तते —$^{c}$) Ś1 Ñ V1.2 B1–4 D1.3.4.5.12 दैवाश्च B4 दैवार्थं, D8 धैर्याश्च, Cg k t as in text (for दैवे च) —D12 om (hapl) 8$^{d}$–9$^{c}$

9 D12 om 9$^{abc}$ (cf v l 8) —$^{a}$) B4 D1.3.6 एकोऽर्थान् (for एकोऽर्थं) Ś1 Ñ V1.2 B1(before corr विराजति) 3–4 D1–4.6.9 विमृशति G2 कुरुते हि M1.2 विमृशन् (for विमृशेद्) —$^{b}$) T2 तु प्रकृतेः M1.2 च कुरुते (for प्रकुरुते) Ś1 Ñ1 V2 D1.4 मतिं (for मनः) Ñ2 V1 B D2.3.5 धर्मस्य(D3 धर्मेषु D6 धनार्थं) कुरुते मतिं D5 मतिं च कुरुते स्वयं —$^{d}$) Ś1 D12 पुरुषं परं (for मध्यमं नरम्) —After 9, D7 ins रामाय मन्त्र

10 $^{a}$) Ś1 M5 विनिश्चित्य D10.11 G2 Ck t न निश्चित्य (for अनिश्चित्य) Ñ2 B D5 गुणदोषमनिश्चित्य, V1.2 D4 गुणदोषान्व्यवनिश्चित्य ✿ Cr गुणदोषावनिश्चित्येति पाठः ✿ —$^{b}$) Ñ2 D3 त्यक्त, D7 M5 कृत्वा (for त्यक्त्वा) D8 T2 दैव, M2 Cm धर्मे, Cg k t as in text (for दैव) V1 परायण (for व्यपाश्रयम्) Ś1 D2.4.5.12 त्यक्तधर्मव्यपाश्रय, Ñ1 D1.3 त्यक्तदैवव्यपाश्रय, V2 त्यक्तदोषपरायण, B1.3 G2 व्यक्त(G1 त्यक्त्वा) दे(B3 दै)वव्यपाश्रय, B2 व्यक्त दैवैस्यपाश्रय, B4 व्यक्त दैवमपाश्रय, L(ed) दैव एकपरायण —$^{c}$) D3 यत् (for य) G2 कुर्यात्, Cm g k t as in text (for कार्यम्) —$^{d}$) B D9 कुरुते, D4 उपेक्ष्य (for उपेक्षेत्) D6 महाधमः. G2 तमाहुरधमं नरं ✿ Cm g उपेक्षेत् उपेक्षेत ✿

11 $^{a}$) Ñ1 V1 D1–4.6 T2 G3 [ए]व (for [इ]मे) Ś1 D12 यथैव पुरुषा(D12 °ष) लोके, Ñ2 V2 B D2 यथैव पुरुषानाहुर्(B2 °नाः तु), T2 यदिमे पुरुषा सत्यम् —$^{b}$) Ñ2 V2 B1.2.4 D1 मध्यमान् —B4 D5.12 G2 M2.3 om (hapl ?) 11$^{cd}$. —$^{c}$) Ñ1 V1.2 B1–3 D2 तथा (for एव) B1 हि, G2 च (for ऽपि) D6 T1 M3 एव मन्त्रा हि विज्ञेया —$^{d}$) D1 T2 M3 मध्यमा.

12 $^{a}$) V1 ऐकमर्थम्, V2 एकत्व सम्, Cr m g k t as in text (for ऐकमत्यम्) —$^{b}$) Ś1 Ñ V3 B1.3 D2.5.6.12 G2 कर्मणा, B2 धर्मेना Cm g k t as in text (for चक्षुषा) —$^{c}$) Ś1 D12 मन्त्र (for यत्र) Ñ1 D7.8 मन्त्रिणो(Ñ1 °णो) मन्त्रनियमाद्, Ñ2 B2 D8 मन्त्रिणो त्रिनयोपेत, V1.2 B1.3.4 मन्त्रिणो योग(B1 °त्र) नियमस्, D3.4.5 मन्त्रिणो मन्त्रनियमस्(D8 °यत) —B1 reads $^{d}$ in marg —$^{d}$) D1 मंत्रसत्तम

13 $^{a}$) D5 बाह्व, Cm g as in text (for बह्व्यो) M3 हि (for ऽपि) D1.3 T1 विमतयो Cm g as in text (for ऽपि मतयो) Ś1 मत्वा, D7 कृत्वा, D6 विरता D12 मत्वा, M3 Cm g भूत्वा (for गत्वा) Ñ2 B D6–11 Ct G(ed) बह्वीरपि म(Ñ1 D5 ग)तीर्गत्वा(G [ed] °र्दृष्ट्वा) V1.2 बह्वीरपि मतीः कृत्वा, D5 बहूनां तु पृथग्भूत्वा —$^{b}$) G2 मंत्रिणा G1 (ऽ)पि (for हि). Ś1 विचार्य मंत्रनिर्णये, Ñ1 B2 D7 M1.2 मन्त्रिणो (D7 °णो) मन्त्रनिर्णये, Ñ1 V1.2 B1.3.4 D2.3.4.5.6 T2 M4.5 मन्त्रिणामर्थनिश्चये(B1 T2 M3.4 °निर्ण, D5 °निर्द)ये, D6 मंत्रिणो मन्त्रनिर्णये, D10.11 मन्त्रिणामर्थनिर्णय ; D11.3.4.5 मन्त्रिनिश्चये G2 मंत्रिणोऽर्थविनिर्णये ✿ Cr बह्वो मतय

असिन्नेवंगते कार्ये विरुद्धे वानरैः सह । | हितं पुरे च सैन्ये च सर्वं संमन्त्र्यतां मम ॥ १८

इति श्रीरामायणे युद्धकाण्डे षष्ठः सर्गः ॥ ६ ॥

18 N̄1 damaged for 18ᵃᵇ (cf 112*) —ᵃ) Ś1 N2 V1 3 B1-3 D2 8 9-12 G2 Ck t तस्मिन्, G3 तस्माद्, Cr m g as in text (for वास्मिन्) Ś1 N̄2 V1 3 B D2 9-12 T2 Ck t -विधे; Cm g as in text (for गते). Ś1 D12 कार्ये (for कार्ये). —ᵇ) Ś1 D12 विरोधाद्; D1 3 विरोधो, D2 5 6 T1 2 विरोधे, G3 M5 विरुद्धैः; Cr m g k t as in text (for विरुद्धे) N̄2 B1-3 D5 सम राक्षसाः (for वानरैः सह) —ᶜ) L(ed) सैन्येन (for सैन्ये च) —ᵈ) D1 तत्सर्वं, T2 सर्वं स, Cm g k t as in text (for सर्वं स) M6 समयता (for समन्त्र्यता) N̄ V1 B2 4 D2 3 5 इति, V2 B2 3 इह (for मम) —For 18ᶜᵈ, Ś1 D12 11 subst, N̄1 ins after 17, V1 3 D1 6 ins after 18ᵃᵇ

115* यदस्मार्कं क्षमं भूत तत्संप्रति प्रविमृश्य हि ।

[V1 3 कार्यं (for भूत) V1 प्रतिपश्यत, V3 प्रविधीयतां, D6 प्रभिमृश्य च (for प्रविमृश्य हि) ]

—After 18, N̄2 V1 3 B D5 ins.

116* इति रजनीचराधिपेन तेन
रजनीचरा स्वमतानि चोदिताः ।
विधिवदनुविचिन्त्य सर्वशो
दशवदनेन यथा प्रचक्रमु ।

[(l 1) N̄2 V1 3 B4 D5 रजनिचराधिपेन B3 om (hapl) तेन —(l 2) N̄2 B4 D5 रजनिचराः N̄2 V3 मुनतानि, B1 4 स्व(B3 मु)मतेन (for स्वमतानि) N̄2 वाचिताश्च, B1 नोदिताः, D5 नोदिता (for चोदिता) —(l 3) B3 विविधम् (for विधिवद्) B2 अथ (for अनु) V2 सर्वो (for सर्व(शो)) —(l 4) B1 3 यथादौ, B4 ह्यथो (for यथा) B2 3 प्रचक्र

Colophon D1 T2 om N̄1 damaged colophon —*Kanda name* N̄2 V1 3 B D1 3 6 9 12 सुन्दरकाण्डे, —*Sarga name* Ś1 D12 रावणमंत्र, N̄2 V1 3 B D1 8 रावणमंत्रः, D5 लंकायांराजमंत्रः, D6 न्यौत्साः(श्रीपा ?) विकृतो — *Sarga no* (figures, words or both) B2 4 D1 4 5 12 om, Ś1 79, N̄2 D5 81, V1 76, V2 69, B3 70, B1 83, D2 84, D7-10 12 T1 2 G M 6 (as in text), L(ed.) 77. —After colophon, D2 concludes with रामः, G M1 2 3 with श्रीरामाय नमः.

७

G 5 7[6] 1
B 6 7 1
L 5 7[8] 1

इत्युक्ता राक्षसेन्द्रेण राक्षसास्ते महाबलाः ।
ऊचुः प्राञ्जलयः सर्वे रावणं राक्षसेश्वरम् ॥ १

राजन्परिघशक्त्यृष्टिशूलपट्टससंकुलम् ।
सुमहन्नो बलं कस्माद्विषादं भजते भवान् ॥ २

कैलासशिखरावासी यक्षैर्बहुभिरावृतः ।
सुमहत्कदनं कृत्वा वश्यस्ते धनदः कृतः ॥ ३

स महेश्वरसख्येन श्लाघमानस्त्वया विभो ।
निर्जितः समरे रोषाल्लोकपालो महाबलः ॥ ४

विनिहत्य च यक्षौघान्विक्षोभ्य च विगृह्य च ।
त्वया कैलासशिखराद्विमानमिदमाहृतम् ॥ ५

मयेन दानवेन्द्रेण त्वद्भयात्सख्यमिच्छता ।
दुहिता तव भार्यार्थे दत्ता राक्षसपुंगव ॥ ६

दानवेन्द्रो मधुर्नाम वीर्योत्सिक्तो दुरासदः ।
विगृह्य वशमानीतः कुम्भीनस्याः सुखावहः ॥ ७

निर्जितास्ते महाबाहो नागा गत्वा रसातलम् ।
वासुकिस्तक्षकः शङ्खो जटी च वशमाहृताः ॥ ८

## 7

D4 T2 cont the previous Sarga

1 [ab]) D6 तु (for ते) G2 रावणेन, Cr k t as in text (for राक्षसास्ते) D6 इत्युक्ता राक्षसा सर्वे राक्षसेंद्रेण धीमता —[c]) Ś1 D12 वलिद (for रावण) —Ñ2 damaged after रावण up to 16[a] (read after 1) Ś1 Ñ2 V1 D1 4 8 13 राक्षसाधिप, G1 राक्ष*** —After 1, Ś1 Ñ V3 B D1 4 8 11 13 read 16 —After 1, D6 T1 G2 3 M3 5 6 ins while D3 7 10 11 T2 3 G1 M1 Cm g k t ins 117 only

117* द्विषत्पक्षमविज्ञाय नीतिशास्त्रस्वपुर्वथ ।
अवज्ञायात्मपक्षं च राजान सीदयन्ति हि ।

[(l 1) G1 स्वात्ताय (for अवि°) —(l 2) G2 3 M3 6 मविज्ञाय (for अव°) G2 हि (for च) ]

2 [a]) T2 ज्ञानद् (for राजन्) Ś1 D12 निस्त्रिंश, Ñ2 V3 B2 3 D2 शूलेषु V2 B1 4 शूलेन, T G2 M1 शक्त्यष्टि, G3 शरखड्ग Cr m g as in text (for शक्त्यृष्टि) —[b]) N2 V1 3 B D2 खड्ग (for शूल) Ś1 D12 शक्त्यृष्टि, Ñ1 D1 4 8 मुद्गर, N2 V1 3 B D3 7 8 11 M1 Cm g पट्टिश; D4 पट्टसु M3 पट्टिस, Cr as in text (for पट्टस) D3 10 11 कुंतल Cr m g as in text (for संकुलम्) —[c]) Ś1 N2 V1 3 B D1 3 8 13 ते, D2 सद् (for नो) M1 2 अथ (for बल) K1 सुरक्षभवन कस्माद् —[d]) Ś1 D12 कुरुते (for भजते) —After 2 D1 7 10 11 S ins

118* त्वया भोगवती नाथ निर्जिता पश्यतां युधि ।

3 [a]) Ś1 Ñ V1 3 B D1-4 8 11 13 कैलासशिखर(D4 °रे) गता T1 G2 °रावासो —[b]) Ś1 Ñ V1 3 B D1 4 8 11 13 समावृतः D2 समावृता D8 वाहने L(ed) पूत (subm) (for आवृत) —B1 om 3[cd] —[c]) Ś1 Ñ2 V1 3 D1-4 8 11 भीमा यक्षास्त्वया सार्धं —[d]) Ś1 Ñ1 V1 D1 4 8 11 वशा(Ś1 after corr °शी) च V2 वशत्र (for वश्यस्ते)

4 [a]) N2 B D2 त (for स) D1 महेश्वरस्य (for स महेश्वर) —[b]) Ñ2 B D2 श्लाघमान D3 4 5 7 8 T1 G2 M श्लाघ्यमानस्, D4 T2 3 श्लाघनीयस्; Ck t as in text (for श्लाघमानस्) Ñ2 B2 D2 महामते(B2 °ति) B1 3 सदा विभो, B4 पर विभो D1 त्वयानघ (for त्वया विभो) —[cd]) D2 निर्जिता (for °त) D8 लोकपाला महाबला (for [d]) Ñ2 B1(m) 3-4 D2 निर्जित्य समरे राजॅल्लोकपालं महाबल(B2 महेश्वर)

5 [a]) D1 7 10 11 T1 G Ck t विनिपात्य, D8 विनिर्जित्य (for विनिहत्य) —[b]) Ñ2 D7 10 11 विनिगृह्य, B1 2 D2 5 8 M1 च निगृह्य B4 * विगृह्य (for च विगृह्य) V2 विनिक्षिप्य निगृह्य च

6 [b]) Ś1 D12 भवस्या वै L (ed) त्वद्भव्या (for त्वद्भयात्) D2 8 संधिम् (for सख्यम्) —[c]) D1 11 भार्यार्थं (for °र्थे) —[d]) Ñ2 V1 D1-4 8 राक्षसनंदन

7 [a]) Ś1 Ñ V1 3 B D1-8 7-11 T1 G1 3 M5 महाबाहो (V2 °बाहो, D1 °बलो, D2 °बाहुर्) (for मधुर्नाम) —D2 om (hapl) from [b] up to 8[a] (see var) —[b]) Ś1 D1-4 12 दुरासदम्; Ñ2 B2 3 D2 मधुस्तथा V1 3 B1 4 मधुस्तथा (for दुरासद) —[c]) Ś1 Ñ V1 3 B D1 4 8 13 प्रसह्य(B2 °ह्यो) D8 प्रगृह्य D4 T2 3 नि° (for वि°) Ñ2 B D2 वशगो सु(D4 तु)त (for वशमानीत) —[d]) D1 कुंभनाश (for कुम्भीनस्या) Ñ1 V1 3 B D2 कृते त्वया; D11 यथावह (for सुखावह) Ñ1 कुम्भनासा महाबल

8 D2 om 8[a] (cf v l 7) —[b]) B2 रसालयं (for °तलम्) —[c]) Ś1 D8 सर्वो (sic), Ñ2 V1 3 B D2 पद्म 3 D2 सस्पो D2 संभो (for शङ्खो) —[d]) D1 T2 G3 M1 2 3 आगत (D4 M1 °ता) (for आहृता) Ś1 Ñ2 D1-4 8 13 जटी चैव जटी(Ñ2 D2 °टो) कृत (Ś1 Ñ1 D12 °ता), N2 V1 3 B D2 शेष(V1 °ष)कर्कोटकाद्य ⊛ Cg जटी सर्वविदोषस्य नाम। त्वया भोगवतीमित्वा तक्षकादिषु कर्कोटकादिजयोऽभिहित इति न पौनरुक्त्यम् ⊛

अक्षया बलवन्तश्च शूरा लब्धवराः पुनः ।
त्वया संवत्सरं युद्ध्वा समरे दानवा विभो ॥ ९

स्वबलं समुपाश्रित्य नीता वशमरिंदम ।
मायाश्चाधिगतास्तत्र बहवो राक्षसाधिप ॥ १०

शूराश्च बलवन्तश्च वरुणस्य सुता रणे ।
निर्जितास्ते महाबाहो चतुर्विधबलानुगाः ॥ ११

मृत्युदण्डमहाग्राहं शाल्मलिद्वीपमण्डितम् ।
अवगाह्य त्वया राजन्यमस्य बलसागरम् ॥ १२

जयश्च विपुलः प्राप्तो मृत्युश्च प्रतिषेधितः ।
सुयुद्धेन च ते सर्वे लोकास्तत्र सुतोषिताः ॥ १३

क्षत्रियैर्बहुभिर्वीरैः शक्रतुल्यपराक्रमैः ।
आसीद्वसुमती पूर्णा महद्भिरिव पादपैः ॥ १४

---

9 B4 om 9^b – 10^d —^b) Ś1 D13 लब्धवरा (for लब्धवरा) Ñ1 D1 4 8 तथा M3 पुरा (for पुन) —For 9^ab V1 3 subst while Ś1 Ñ1 B4 D1 3 12 subst l 2 only for 11^cd

119* अक्षया बलवन्तश्च वरुणस्य पुरा रणे ।
विजितास्ते महाराज चत्वार सपदानुगा ।

[ (l 1) V1 सुता (for पुरा) —(l 2) D6 विजयाय Ś1 महाभाग (for °राज) V2 3 सबलानुगा Ś1 B4 D13 L(ed) चतुर्विधबलान्विता (L[ed] °बला ) (for the post half) ]

—^c) D6 G3 संवत्सरे (for °र) D1 4 8 घोरा (for युद्ध्वा) Ś1 D13 त्वया मम शरणोग्रा N1 त्वया संवत्सरो घोरा —^d) Ś1 D13 जिता G3 कृता (for विभो) N1 D1 4 8 दानवा समर कृता N2 V1 2 B1–3 D9 निवातकवचा रणे —After 9 D1 7 ins

120* निवातकवचा घोरा योद्धारो बलदर्पिता ।

[ D1 om from योद्धारो up to 10^a ]

10 B4 om 10 (cf v l 9) D1 om 10^a (cf v l 120*) B3 D8 om (hapl ) 10 11^b —^a) D8 स्ववश (for स्वबल) Ñ1 च समाश्रित्य D8 °स्थ (for समुपाश्रित्य) N2 V1 B1 3 स्ववश(B2 °य) बलमवहस्य —^b) N2 V1 B1 2 सदयम् (for वशम्) —For 10^ab V3 subst

121* निर्जितास्ते महाराज चतुर्विधबलानुगा ।

—^c) T3 क्रियास् (for मायास्) N2 V1 3 B1 2 निर्जितास् (for [अ]धिगतास्) —^d) D6 7 10 11 T1 G3 M1 2 बहवो वै Cg k as in text (for बहवो) N2 V1 3 B1 2 प्राप्ता राक्षसपुंगव ※ Cg बहव बहव । बोवो गुणवचनात् इति पक्षे दीर्घभाव ※ —For 10^cd Ś1 N1 D1 4 8 12 subst while V3 cont after 121*

122* आहृताश्च बलात्कांपा बहवो राक्षसपुंगवा ।

[ Ś1 D13 दुर्जया (for सुजया) ]

—After 10 M3 ins

123* निवाता समर रोपालोकपाला महाबला ।
देवलोकमितो गत्वा शक्रश्चापि विनिर्जित ।

[ For l cf 4^cd ]

11 B1 D8 om 11^ab (cf v l 10) —^b) G3 वरुणाश्च (for °णस्य) B4 पुरा (for सुता) V2 पुरा लब्धवरा पुन —For 11^cd Ś1 N1 B4 D1 4 8 13 subst l 2 of 119* —^c) Ñ2 V1 3 B –3 D9 7 8 T2 3 G2 M1 2 महाराज D10 11 °भाग G1 °भागाद् (for महाबाहो)

12 ^a) B1 D1 G2 मृत्युदण्ड Cr m g k t as in text (for °दण्ड ) —^b) Ś1 N V3 B D1 4 6 13 T2 3 G M3 Cr g k t शाल्मली(B1 4 D1 13 T2 °लि)द्रुम (for °द्वीप ) N1 V1 B D8 कटक V2 सकट D6 7 T M3 Cr भूषित (D6 °ता) Cg k t as in text (for मण्डितम्) —After 12^ab D9 7 10 11 T1 G2 3 M3 ins

124* कालपाशमहावीचिं यमकिंकरपन्नगम् ।
महाज्वरेण दुर्धर्षं यमलोकमहार्णवम् ।

[ D5 T1 G3 M3 om 1 2 —(l 2) G2 महावरोपदुर्धर्ष (for the prior half) ]

—^c) L(ed) अवगाहितवान्राजन् —^d) B4 सादन (for सागरम्)

13 ^a) G2 विपुल (for °ल ) Ś1 N V1 2 B D1 4 8 9 13 यशश्च विपुल प्राप्त —^b) N2 B D9 समर जित B1 °रोधित , B4 D4 7 8 °वाधित (for प्रतिषेधित ) —^c) D6 सुयोधेन N1 V1 3 D2–4 हि M3 तु (for च) D1 3 सुयुद्ध निहते सर्व —^d) D6 T2 3 त्रयो लोका (for लोकास्तत्र) N1 D1 4 8 स्म N2 V3 B D8 (प्र)व (for सु ) D6 M3 Cg विलो लिता Ck t as in text (for सुतोषिता ) Ś1 D 3 लोका सुबहुतोषिता

14 ^a) V3 वीर G1 M1 2 शूरै (for वीरै ) —^c) Ś1 N1 V1 D1 4 8 13 जीर्णा (for पूर्णा) —^d) N1 D6 T3 पावकै D3 दानवै D7 G1 पर्वतै Cv as in text (for पादपै ) D1 देवदानवै —After 14 B4 ins 125*

G 6 15 20
B 6 39 17
L 6 18 18

शिखरं तु त्रिकूटस्य प्राशु चैकं दिविस्पृशम् ।
समन्तात्पुष्पसंछन्नं महारजतसंनिभम् ॥ १८
शतयोजनविस्तीर्णं विमलं चारुदर्शनम् ।
श्लक्ष्णं श्रीमन्महच्चैव दुष्प्रापं शकुनैरपि ॥ १९
मनसापि दुरारोहं किं पुनः कर्मणा जनैः ।
निविष्टा तत्र शिखरे लङ्का रावणपालिता ॥ २०
सा पुरी गोपुरैरुच्चैः पाण्डुराम्बुदसंनिभैः ।
काञ्चनेन च सालेन राजतेन च शोभिता ॥ २१
प्रासादैश्च विमानैश्च लङ्का परमभूषिता ।
घनैरिवातपापाये मध्यमं वैष्णवं पदम् ॥ २२
यस्यां स्तम्भसहस्रेण प्रासादः समलंकृतः ।
कैलासशिखराकारो दृश्यते खमिवोल्लिखन् ॥ २३
चैत्यः स राक्षसेन्द्रस्य बभूव पुरभूषणम् ।
शतेन रक्षसां नित्यं यः समग्रेण रक्ष्यते ॥ २४

18 V₁ om 18^ab (cf v l 17) —^a) Ś D₂,₃,₄,₆ ₁₁,₁₃ शिखरस्तु, Ñ B₁ गिरेस्तस्य, B₂,₃ शिखस्तस्य, D₅,₈ T₁ M₃ शिखर तत् (*for* शिखरं तु) B₄ गिरेस्तु चित्रकूटस्य —After 18^a, D₁₁ ins

604* नवतिर्योजनोच्छ्रित ।
शतयोजनविस्तार

—^b) D₇,₈ चैव (for चैकं) B₁ D₂,₃ नभःस्पृश (B₁ °शन्), D₅ नभःस्थल (for दिविस्पृशम्) Ś Ñ V₂,₃ B₂,₄ D₂,₃,₄,₆,₁₂,₁₃ प्राशुरेको (Ñ D₃ °मेके) नभःस्पृश (Ś V₁,₃ D₂,₆,₁₁ °शन्, B₄ D₁₃ °स ; D₀ °स्तुत ), B₃ प्राशुमेकं नभःस्पृशं, M₂,₃,₄ प्राशु चैकं (M₃ °व) दिविस्पृशं ‡ Cr दिविस्पृशमिति पाठः ॥ Ct दिविस्पृक् दिविस्पृक् । पूर्वपदे 'दृशुपथ्यां च' इति दीर्घत्वम् । स्पृशो कर्मण्यनुपपदे ‡ —^c) Ś Ñ V B₁-₃ D₂,₃-₆,₁₁,₁₂,₁₃ द्रुम, B₄ कन्न (for पुष्प-) Ś V₁,₃ B₄ D₂,₃,₄,₆,₁₁,₁₂,₁₃ -संछन्नो D₅ समवाद्रुमकान्तश्च —^d) Ñ B₁,₃ [म]प्रचय (for रजत ) D₁₀ om T₂ -संनिभौ (s c) Ś V B₄ D₀,₄,₁₂,₁₃ G₃ महाम्बुद(D₃ °रजत)संनिभ (B₄ D₃ G₃ °भिं, D₃ °नि स्तम)

19 Ś₁ B₃ D₃,₆ om 19^ab —^cd) Ñ B₂,₃ भयश्रोर्ध्वं च विस्तीर्णं विमलादर्शसंनिभं। D₃ शत सार्धं सुविस्तीर्णं विमला ***** (om after विमला up to 20^a) —For 19^cd, Ś₁ V B₁ D₂,₆,₁₁,₁₂,₁₃ subst

605* शतश्रोर्ध्वं च विस्तीर्णो विमलादित्यसंनिभ ।

[B₁ श्वद् D₆ त्रियैक् D₁₃ लोभद् (for श्रेष्ठ) D₆ तु (for च) V₁,₃ वितीर्णं D₆ [आ]°र्ग (for [आ]दित्य ) B₄ D₁₃ विमल दुष्प्रापं (for the post half) ]

—^a) B₁ श्लुप (for श्लक्ष्णं) Ñ B₂,₃ सम (for महत्) Ś V B₁ D₂,₃,₄,₆,₁₁,₁₂,₁₃ श्लक्ष्ण (D₆ शुक्ल ) श्रीमान्महा(B₄ °न्यधु)मेव —D₁₃ om 19^c–20 —^d) Ś B₁ D₂,₃,₆,₁₁,₁₃ दुष्प्राप (for दुष्प्रापं)

20 D₃ om 20^a, D₁₃ om 20 (for both, cf v.l. 19) D₁₁ reads 20^abc twice —^a) Ś V B₁ D₂,₃,₄, ₆,₁₁ दुरारोह —^b) Ś V B₁ D₂,₃,₄,₁₁,₁₂ च लोका किमु कर्मणा Ñ B₁-₃ निर्मितं विश्वकर्मणा D₅ कुत एव तु कर्मणा —^c) Ś V B₁ D₂,₃,₄,₆ G₁,₃ M₂ यस्या D₄,₆-₁₀,₁₁ G₁ तस्य (for तत्र) Ñ B₁-₃ निविष्टा शिखरे (B₁ °र) तस्य (B₁ सत्र) —After 20 D₅-₇,₉-₁₁ S (G₃ after 21^cd) ins.

606* दशयोजनविस्तीर्णा विंशद्योजनमायता ।

[T₃ त्रिशद् M₁ शत (for दश) —D₅ om (hapl) from विस्तीर्णा up to योजन D₅ T₂ तथा त्रिगुणम्, D₇ T₃ G₁ M₃ तथा त्रिगुणम् D₅ T₁ G₂ M₁-₃ त्रिंशद्यो°, G₁ द्वन्यो° (for विंशद्योजनम्) ]

21 ^a) Ś V D₂-₄,₆,₁₂,₁₃ स्त्रियै, D₆ कश्चै (for उच्चैः) —^b) B₂,₃ T₁ G M पाण्डर B₄ प्राशुर (for पाण्डुर॰) Ñ₁ [अं]भोद (for [अ]म्बुद ) Ś V D₂-₄,₆,₁₂,₁₃ विविधाकारतोरणैः —After 21^ab, G₂ ins. 606* —Ś D₂,₁₁ om 21^cd —^cd) D₁₁ [ए]व (for च) D₅ om हेम राज Ñ V₂ B₁,₃ D₆,₁₂ जालेन, V₁,₃ D₇,₉-₁₁ Ct सालेन, B₄ द्वारेण D₆ शैलेन। Cm g as in text (for सालेन) G (ed) द्वारेण कांचनेनैव (for °) D₂,₃,₄,₆,₇,₉-₁₁ T₂ शोभते (for शोभिता)

22 Ñ₁ B₂ om (hapl ?) 22^cd V₁ reads 22^cd in marg —^a) D₁ वितानैश्च (for विमानैश्च) V₃ प्रासादैर्विविधैश्चोभैः, D₁₃ प्रासादैः परमेश्वर —^b) Ś₁ Ñ₂ V₁,₃ B₁,₄ D₂-₄,₆,₁₂,₁₃ शोभिता B₂ M₁,₃ शोभते (for भूषिता) G M₁ लंकायां विराजते —^c) Ś₁ D₂,₁₃ तपापाये (for [आ]तपा°)

23 ^a) B₁ D₂,₃,₆,₁₂ T₁ यस्या (for यस्यां) B₄ यस्यां तु D₆ यस्योस्तम्भ (for यस्यां स्तम्भ ) —^b) Ś V D₂,₃,₄,₁₂,₁₃ सवकांचन (D₁₃ °नै ) (for समलंकृत ) M₃ प्रासादे समलंकृते

24 ^a) G₁ M₂ चैत्यश्च, G (ed) पुनश्च (for चैत्य स) B₄ इषितो यस्तु सैश्रुत्य। D₆ चैत्यो राक्षसराजस्य ‡ Cg चैत्य इति । नगरमध्यचतुष्पथे चैत्यम्, तत्र भवश्चैत्य॰ ॥ Ck चैत्य आकत्यो बभूव। । छिन्नपथमध्यात्पथ ॥ so also Ct. ‡ —^b) Ś Ñ V B D₂-₄,₆,₁₂,₁₃ रावणस्य दुरासदः —^c) V₁ B₁ पुनरां M₃ शतैरः Cg (as in text (for शतेन) B₄ D₂,₃ रक्षसा (for रक्षसां) D₁₃ शतैर राक्षसानां च —D₆ om 24^d–25^a —^d) V₃ समग्रेण च, D₁ य स नृपेण D₁₃ समग्रश्च (for य समग्रेण) M₃ कल्पते D₆ च सदैव निषेव्यते. —After 24, Ñ V B ins.

तां समृद्धां समृद्धार्थो लक्ष्मीवाँल्लक्ष्मणाग्रजः ।
रावणस्य पुरीं रामो ददर्श सह वानरैः ॥ २५

तां रत्नपूर्णां बहुसंविधानां
प्रासादमालाभिरलंकृतां च ।
पुरीं महायन्त्रकवाटमुख्यां
ददर्श रामो महता बलेन ॥ २६

G 6 25 • B 6 30. 27 L 6. 23 26

इति श्रीरामायणे युद्धकाण्डे त्रिंशत्तमः सर्गः ॥ ३० ॥

---

607* ददृशुस्ते तदा लङ्कां विहसन्तो ह्यलंकृताम् ।
पश्चिमा म्रियमाणेव नारीमिव मुमूर्षतीम् ।

[(l 1) B4 ततो (for तदा) B3 प्रविशन्तो (for विहसन्तो) B4 दिव्यस्त्रीमलंकृता (for the post half) —(l 2) B3 दिशम् (for म्रियम्) V2 सुश्रियो म्रियमाणां (for the post half) ]

while D5–7 9–11 S ins after 24

608* मनोज्ञां काननवतीं पर्वतैरुपशोभिताम् ।
नानाधातुविचित्रैश्च उद्यानोपवनाकुलाम् ।
नानाविहगसंघुष्टां नानामृगनिषेविताम् ।
नानाकुसुमसंछन्नां नानाराक्षससेविताम् ।

[(l 1) D10 11 काचनवतीं (for काननवतीं) —(l 2) Note hiatus between the two halves M3 सुयान (for उद्यान) D5 9–11 T1 M3 उद्यानैरुपशोभितां (for the post half) —(l 3) D1 G1 M2 विहग (for विहग) D7 समायुतां (for निषेविताम्) G3 नानाविहगसेवितां (for the post half) —(l 4) D9 11 T3 सपत्नां (for संछन्नां) D5 T1 M1 2 नानाद्रुम(D6 °मृग)समाकीर्णां M3 नानाकानन शोभितां (for the prior half) ]

25 D6 om 25[a] (cf v l 24) V3 om 25[ab] —[a]) D13 ततस्समृद्ध Ś V1 2 B2 D5 8 9 10–13 T1 M3 Cg समृद्धार्थां (for समृद्धार्थो) Ñ B3 4 ता समृद्धोथ लक्ष्मीवान् —[b]) Ñ B1 2 राघवो, D13 लक्ष्मीक (sic) (for लक्ष्मीवाँल्) —[c]) D13 पुर (for पुरीं) M1 2 लङ्कां (for रामो) —[d]) B4 वानरैः सह (by transp) —After 25 D5–7 9–11 S ins

609* ता महागृहसंबाधां दृष्ट्वा लक्ष्मणपूर्वजः ।
नगरीममरप्रख्यो विस्मयं प्राप वीर्यवान् ।

[D10 11 om l 1 —(l 1) G1 3 महापुर (for °गृह) —(l 2) D9–12 त्रिदिव (for अमर) D9 11 T3 प्रख्यां (for प्रख्यो) G3 प्राप्य (for प्राप) D5 वीर्यवान्विस्मय (sic) T2 वीर्यवान्प्राप विस्मय T3 वीर्यवान्प्राप्तविस्मय G3 विस्मयं परमं गतः (for the post half) ]

26 [a]) V1 3 स (for ता) D4 बहुसंनिधाना, M1 2 विविधा विचित्रैः (for बहुसंविधानां) —[b]) D4 अलंकृतानां —[c]) V3 damaged B4 महापथ, D2 महाहर्म्य (for महायन्त्र) Ñ V B2 4 D5–7 9 12 कपाट (for कवाट) Ś Ñ1 V(V1 m) B1 3 D4 8 13 -युक्तां, V1 पूर्णां B4 D1 2 12 -गुप्तां, D3 दुर्गां G M5 सयुतां (for मुख्यां) —[d]) Ś D9 12 सह लक्ष्मणेन, Ñ2 V B2 D5–8 13 सहितो बलेन (for महता बलेन)

Colophon —*Kanda name* D2 3 सुंदरकाण्डे —*Sarga name* Ś Ñ1 B1–3 D5–8 9 12 13 लङ्कादर्शन (D5–6 °न), Ñ2 D9 लङ्कावर्णन V लङ्कावलोकनं, B4 पुरीदर्शन —*Sarga no* (figures words or both) Ś1 N1 D5 2 4 9 12 13 37 Ś2 Ñ2 V1 2 B D3 15 V3 D1 13 D2 17 D6–7 10 12 T1 2 G M 39 T3 38 —After colophon D2 concludes with जय राम, G M1 2 5 with श्रीरामाय नमः, —After Sarga 30 D5–7 9–11 S ins a passage relegated to App I (No 18)

# ३१

G. 6. 16. 1
B. 6. 42. 1
L. 6. 16. 1

अथ तस्मिन्निमित्तानि दृष्ट्वा लक्ष्मणपूर्वजः ।
लक्ष्मणं लक्ष्मिसम्पन्नमिदं वचनमब्रवीत् ॥ १
परिगृह्योदकं शीतं वनानि फलवन्ति च ।
बलौघं संविभज्येमं व्यूह्य तिष्ठेम लक्ष्मण ॥ २
लोकक्षयकरं भीमं भयं पश्याम्युपस्थितम् ।
निबर्हणं प्रवीराणामृक्षवानररक्षसाम् ॥ ३
वाताश्च परुषं वान्ति कम्पते च वसुंधरा ।
पर्वताग्राणि वेपन्ते पतन्ति धरणीधराः ॥ ४

## 31

1 V3 om. 1–19. Ñ1 B2 om. 1–13. D13 reads 1^{cd} (including 611*) before 81^{cd}. —^{a}) Ś V3 B2.4 D6–8.10.12.13 तत्र (for तस्मिन्). T2 शुभ्रूतें तु; Cr.m g k.t as in text (for निमित्तानि).

—After 1^{ab}, D6–7.9–11 S ins.:

610* सुग्रीव सपरिष्वज्य तदा वचनमब्रवीत् ।
असमन्त्र्य मया सार्धं तदिदं साहसं कृतम् ।
एवं साहसयुक्तानि न कुर्वन्ति जनेश्वराः ।
संशये स्थाप्य मां चेदं बलं च सविभीषणम् ।
कष्टं कृतमिदं वीर साहसं साहसप्रिय । [5]
इदानीं मा कृथा वीर एवंविधमचिन्तितम् ।
त्वयि किंचित्समापन्ने किं कार्यं सीतया मम ।
भरतेन महाबाहो लक्ष्मणेन यवीयसा ।
शत्रुघ्नेन च शत्रुघ्न स्वशरीरेण वा पुनः ।
त्वयि चानागते पूर्वमिति मे निश्चिता मतिः । [10]
जानतश्चापि ते वीर्यं महेन्द्रवरुणोपम ।
हत्वाहं रावणं युद्धे सपुत्रबलवाहनम् ।
अभिषिच्य च लङ्कायां विभीषणमथापि च ।
भरते राज्यमावेश्य त्यक्ष्ये देहं महाबल ।
तमेवंवादिनं रामं सुग्रीवः प्रत्यभाषत । [15]
तव भार्यापहर्तारं दृष्ट्वा राघव रावणम् ।
मर्षयामि कथं वीर जानन्पौरुषमात्मनः ।
इत्येवंवादिनं वीरमभिनन्द्य स राघवः ।

[(l. 1) D6 तथा, D6 G M3 (with hiatus) एवं; D7.9–11 रामो (for तदा). —(l. 2) T1 सर्वं and सहसा (for सार्धं and साहसं respy). —M3 om. l. 3–5. —(l. 3) D6 T1 M3 ॰कर्माणि (for ॰युक्तानि). —(l. 4) D6.11 चेम (for च इ॰). —(l. 5) D6 सर्वं (for वीर). —(l. 6) Note the hiatus between the two halves. G3 राजन् (for वीर). D9–11 भीदृशं (for अचिन्तितम्). —After l. 6, T1 reads erroneously l. 10. —(l. 7) G3 समायुक्ते (for ॰पन्ने). G2 मम (for मम). —(l. 8) T1 बलीयसा (for यवी॰). —(l. 9) G3 M3 वीरेण (for शत्रुघ्न). —(l. 10) D9.11 मा (for च). D6 यते (for मतिः). G3 इति मे निश्चिता मतिः (for the post. half). —(l. 11) D6.9 T1 G1.2 ॰वरुणोपमं. —(l. 12) G1.2 M1.2 तं (for [स]पु॰). —(l. 13) G1.2 राक्षसेन्द्रं (for विभीषणम्). D6 M3 मथापि वा; G1 विभीषणं M1.2 सर्वं पुरा (for मथापि च). —After l. 13, D6 ins.:

610(A)* द्विगुणं दुराधर्षां लङ्कां रावणपालिताम् ।
अभियात जवेनैव सर्वतो हरिसिंह ।
इत्येव तु वदन्वीरो लक्ष्मण लक्ष्मणाग्रज ।

—(l. 14) D6 आवेश्य, D9–11 आरोप्य (for आवेश्य). D13 त्यक्ष्ये (for त्यक्ष्ये). —(l. 17) D7.9–11 विक्रमं (for पौरुषम्). —(l. 18) G1.2 M3 तम् (for इति). D7.9–11 G1 च (for स).]

while D13 ins.:

611* सुग्रीव लक्ष्मण चैव हनूमन्तं विभीषणम् ।

—Before 1^{cd}, D13 reads 14^{cd}. D5 om. (hapl.?) 1^{c}–13^{b}.

—^{c}) Ś Ñ2 V1.2 B3–4 D6–8.10.13 सपरिष्वज्य, G (ed.) वै समाभाष्य (for लक्ष्मिसम्पन्नम्). D13 परिष्वज्य सुहृत्स्निग्धं. ◊ Cg लक्ष्मिसम्पन्नमित्यत्र "इको ह्रस्वोऽङ्यो गालवस्य" इति ह्रस्वः । लक्ष्मीरत्र निमित्तदर्शनज्ञः सन्तोषः ।, Ct लक्ष्मिसम्पन्नमिति ह्रस्व आर्षं. ◊ —^{d}) Ś D6.8.10.12 ततो (for इदं). Ñ2 V1.2 B2–4 D6.8.9 यथोक्तवदतांवर.

2 Ñ1 V3 B1 D5 om. 2 (cf. v.l. 1). V2 damaged after परि- in 2^{a} up to फल- in 2^{b}. —^{a}) B1 D3–6.13 प्रति; D6 प्रति (for परि). Ś Ñ2 D6.12 गृह्य; V1 B2–4 D8.9.13 गृह्य (for गृह्य). Ś1 -(ह्)ह्ये. Ś B1 D6.8.9.10.12 तूर्णं; B2.3 D6 पूर्णं, G (ed.) तीर्थं (for शीतं). —^{b}) D13 फलवन्ति फलानि च. —^{c}) Ś1 B3–4 D6–8.10.12.13 दश च (D8 दि) स, Ś2 बलानि स; V3 damaged (for बलौघं स). D6 विस्फार; D6 विस्तार्य; D13 विसृज्य (for विभज्य). Ś1 [ज्ये]हं, Ś2 Ñ2 V1 B2–4 D6–8.10.12.13 M3 [इ]दं (for [इ]मं). —^{d}) Ś D3 T3 व्यूहे; B2 D5 G2.3 M1.2 व्यूह्य; Cg t as in text (for व्यूह्य). Ś D6.12.13 तिष्ठामि; Ñ2 V1.2 B3.4 D3–6.10.11 T1 M1.2.3 तिष्ठामः; D6 तिष्ठाव (for तिष्ठेम). B1 यदि तिष्ठति लक्ष्मणे.

3 Ñ1 V3 B1 D5 om. 3 (cf. v.l. 1). —^{a}) D6 घोरं; D13 तीव्रं (for भीमं). —^{b}) Ñ2 B3.4 अहं (for भयं). D6 भयं पश्य समुत्थित. —^{c}) B1 निरहं च (for निबर्हणं). Ś D6.12 तु; V1.2 B2 च (for प्र॰). —^{d}) Ś V1 B2.4 D6–8.10.12.13 सूर्ये; D6 क्षये (for ऋक्ष). Ś D6.12 पश्यामि (for ॰वानर). —After 3, D6 ins.:

612* गुरुकाश्च संग्रामे उभयो: सेनयोरपि ।

4 Ñ1 V3 B1 D5 om. 4 (cf. v.l. 1). —^{a}) Ś D6–8.10.12.13 G1 हि (for च). Ś Ñ2 V1.2 B2–4 D6–8.10.12.13

मेघाः क्रव्यादसंकाशाः परुषाः परुषस्वनाः ।
क्रूराः क्रूरं प्रवर्षन्ति मिश्रं शोणितबिन्दुभिः ॥ ५

रक्तचन्दनसंकाशा संध्या परमदारुणा ।
ज्वलच्च निपतत्येतदादित्यादग्निमण्डलम् ॥ ६

आदित्यमभि वाश्यन्ते जनयन्तो महद्भयम् ।
दीना दीनस्वरा घोरा अप्रशस्ता मृगद्विजाः ॥ ७

रजन्यामप्रकाशश्च संतापयति चन्द्रमाः ।
कृष्णरक्तांशुपर्यन्तो यथा लोकस्य संक्षये ॥ ८

ह्रस्वो रूक्षोऽप्रशस्तश्च परिवेषः सुलोहितः ।
आदित्यमण्डले नीलं लक्ष्म लक्ष्मण दृश्यते ॥ ९

दृश्यन्ते न यथावच्च नक्षत्राण्यभिवर्तते ।
युगान्तमिव लोकस्य पश्य लक्ष्मण शंसति ॥ १०

G 6 26 10
B. 6 41 19
L 6 26 9

G M1-3 परुषा, D7 T2 M5 कलुषा (for परुष) M1 वारि —c) D4 कपते (for वेपन्ते) —d) Ś Ñ2 V1 3 B2-4 D0-4 6 8 10-12 T2 3 G1 2 M3 वद्(B4 D0 1 °र्द्)ति, D13 कपते (for पतन्ति) D5 T1 G3 M3 धरणीरुहा, D7 M1 2 च महीरुहा.

5 Ñ1 V3 B1 D9 om 5 (cf v l 1) —a) Ś V1 2 B2-4 D1-4 6 8 12 13 क्रव्याह्रव(D4 सध्याभ्र)संकाशा (V2 °शाः) —b) Ñ2 D1 2 गर्जन्ति (for परुषा) V1 3 B3 D10 11 स्वरा (V2 °नाः) (for स्वना) B4 D3 18 13 पुरुषा पुरुषस्वना (B3 °रा) —After 5ab, D0 1 8 read 7ab. —c) D11 क्रूर (for क्रूरा) Ś D1-3 6 12 13 वारि (for क्रूर) D2 प्रकर्षन्ति, D7 10 11 प्रवर्षन्ते, D13 प्रमुचन्ति (for प्रवर्षन्ति) —d) Ś Ñ2 V1 3 B3 4 D0-3 6 12 13 रुधिर (for शोणित) T2 बिन्दुच

6 Ñ1 V3 B1 D9 om 6 (cf v l 1) —a) Ś D2 6 8 12 सकाशा. —b) Ś D2 5 6 12 सध्या (D2 मेघा) परमदारुणा —After 6ab Ś D9 8 12 ins

613* ज्वलन्त्यो निपतन्त्येषु महोल्का सूर्यमण्डलात्।

[Ś1 ज्वलन्तो D2 [प]त (for [प]तु) ]

—Then D2 cont D13 ins after 6ab

614* संहिकेनापि च तथा गृहीतौ चन्द्रभास्करौ।
अपर्वणि ग्रहोदग्राः सपरिवेषमण्डलौ।
चक्रमन्नास्कश्चक्रे विच्छिन्नस्तु सुभैरवम्।
अशरीराश्चवा वाच श्रूयन्ते रुग्नुमास्पदा।
उभे सन्ध्ये विभासन्ते क्रव्यादाश्च सुदारुणा। [5]

[(l 1) D2 सैंहिकेयेन —(l 2) D13 मडल —(l 3) D13 विशायाश्च (for विच्छिन्नस्तु) —(l 4) D13 [अ]पि (for तु) —(l 5) D13 च वाशते (for विभासन्ते) ]

—D4 om 6cd. —cd) Ñ2 दिनेषु, V1 प्रज्वलन्, B3 ज्वलंसो, D3 ज्वलद्रि, D4 ज्वलंति (for ज्वलच्च) B3 निपतत्येव B4 दिश्व (for मण्डलम्) B1 अनयच्च निपतत्येतदादित्यमंडल (unmetric).

7 Ñ1 V3 B1 D9 om 7 (cf v l. 1) D0 1 8 read 7ab after 5ab. —a) T2 3 M3 5 Cg as in text (for अभि).

D2 वाश्यति, D6 7 10 11 T G3 M1-3 वाश्यति, M5 पश्यति (for वाश्यन्ते) Ś Ñ2 V1 3 B2-4 (B3 sup lin also orig as in Ñ2) D0-4 8 12 13 आदित्यपथमावृत्य (Ñ2 V1 3 B2 4 D0 1 2 °विश्य) —b) Ś1 D0 1 2 4 जनयति (D0 °ते), L (ed) जनयन्तो —c) B3 नदीनद (for दीना दीन) Ś D8 12 स्वना, D1 मुखा (for स्वरा) D7 10 11 G M3 क्रूरा (for घोरा) —d) Ś V1 3 B3 4 D0-3 8 13 स्वप्रशस्ता, D6 7 T1 न प्रशस्ता V1 द्विपा (for द्विजा).

8 Ñ1 V3 B1 D9 om 8 (cf v l 1) —a) Ś D2 अप्रभस्तथा, Ñ2 V1 B2-4 D0 2 6 10-12 G1 Cg अप्रशस्तश्च (D2 6 °स्तथा) V2 D13 T2 M3 अप्रशस्त (for अप्रकाशश्च) D4 रजताभ प्रशस्त स —D0 om (hapl) 8b–9a (see var) —c) Ś D8 13 श्लिष्ट, B4 ध्वष्ट, G3 कृष्णो (for कृष्ण) B4 रक्ताग, D5 T2 G M5 रक्तात (for रक्तांशु). D5 पर्याशो (for पर्यन्तो) D1 कृष्णरक्ताशुसप्रासो. —d) Ñ2 V1 3 B2 4 D2 पर्यये (for संक्षये) D7 यथा लोकक्षय इवोदित (hypm), T2 यथा कालस्य पर्यय

9 Ñ1 V3 B1 D9 om 9 (cf v l 1) D0 om 9a (cf v l 8) —a) D13 रुक्षोरक्षो (for ह्रस्वो रूक्षो) Ś D8 12 [ऽ]प्रशस्तस्तु, Ñ2 [ऽ]प्रशस्तश्च, D13 M1 2 [ऽ]प्रकाशश्च (for ऽप्रशस्तश्च) —b) Ś Ñ2 D3 G3 च V1 3 B3 4 D1 2 स, D4 7 T2 तु (for सु) G1 2 दारुण (for लोहित) D13 परिवेषेण दारुण —c) D4 म ण्ड ले Ś D8 12 नीम, Ñ2 V1 3 B2-4 D0 11 13 नील (D1 °ले) D1-4 6 लीन (D8 °न) (for नील) —d) Ś Ñ1 V1 B3 4 D0-4 8 13 पश्य (for लक्ष्म) D4 मडले (for लक्ष्म)

10 Ñ1 V3 B1 D9 om 10 (cf v l 1) V1 D13 4 om (hapl ?) 10 D0 transp 10 and 11 —a) Ś Ñ2 V2 B2-4 D0 3 8 12 13 चन्द्रमा, D4 6 10 11 T1 दृश्यते (for दृश्यन्ते) D2 यथावद्धि, D13 तथावद्ध, M3 यदावच (sic) —b) D1 reads in marg from वतत up to 10d Ś Ñ2 B4 D3 12 13 [अ]भिपद्यते, B2 3 °पश्यते, D1 °भिवृत्त (for °वर्तते) —V1 om 10a–11b. —c) Ñ2 B3 4 लोकानां (for लोकस्य) Ś B3 D8 12 13 युगात इव लोकानां —d) Ś Ñ1 B2-4 D0 1 8 12 13 लक्ष्मण दृश्यते, D7 G3 M1 2 शंसति लक्ष्मण (by transp)

G 6.16.11
B 6.41.20
L 6.16.10

काकाः श्येनास्तथा गृध्रा नीचैः परिपतन्ति च ।
शिवाश्चाप्यशिवा वाचः प्रवदन्ति महास्वनाः ॥ ११
क्षिप्रमद्य दुराधर्षां पुरीं रावणपालिताम् ।
अभियाम जवेनैव सर्वतो हरिभिर्वृताः ॥ १२
इत्येवं तु वदन्वीरो लक्ष्मणं लक्ष्मणाग्रजः ।
तस्मादवातरच्छीघ्रं पर्वताग्रान्महाबलः ॥ १३
अवतीर्य तु धर्मात्मा तस्माच्छैलात्स राघवः ।
परैः परमदुर्धर्षं ददर्श बलमात्मनः ॥ १४
संनह्य तु ससुग्रीवः कपिराजबलं महत् ।
कालज्ञो राघवः काले संयुगायाभ्यचोदयत् ॥ १५

---

11 N1 V2 B1 D6 om 11 (cf v l 1) V3 om $11^{ab}$ (cf v l 10) D6 transp 10 and 11 —$^a$) Ś B3 D3 11 ढङ्का, Ñ2 V1 B2 4 D5 4 13 कङ्का (for काका) D1 श्वेता (for श्येनास्) —$^b$) Ś V1 B2 4 D5—8 10 12 13 -चरन्ति; B4 भवन्ति (for पतन्ति) —$^c$) D1 चैव (for चापि) B2 4 [अ]शिवान्, D7 10 11 G1 [अ]शुभा (for [अ]शिवा) B3 4 वाशन् (for वाच) ⊛ Cg शिवा इति भयद्धस्वमृगजात्युक्तावपि पुनरुक्तिरशुभाधिक्यात् ⊛ —$^d$) V2 महास्वनान्; D1 महास्वरा —After 11 D7 10 11 ins

615* शैले शृङ्गेश्च शृङ्गैश्च विमुक्ते कपिराक्षसे ।
भविष्यत्यावृता भूमिर्मांसशोणितकर्दमा ।

[(l 1) G (ed) शरे (for शैले)]

12 Ñ1 V3 B1 D6 om 12 (cf v l 1) —$^a$) Ś Ñ2 V1 2 B2 4 D5 3 4 12 13 तूर्णम्, D1 एतेम् (for क्षिप्रम्) —$^b$) D4 5 T1 G3 M3 लङ्कां (for पुरीं) —D18 om $12^{cd}$ —$^c$) Ś Ñ2 V1 2 B3—4 D5 4 8 12 अभियामो T2 बलेन (for जवेन) —$^d$) B4 सह (for वृता)

13 Ñ1 V3 B1 om 13 D6 om $13^{ab}$ (for both, cf v l 1) —$^a$) D1 T1 M3 सवदन्, D7 M1 2 प्रवदन्, D12 भवदन् —$^b$) G (ed) रामो वै (for लक्ष्मणं) —After $13^{ab}$, D12 reads an addl colophon

[Kaṇḍa name कङ्काकदि —Sarga name लक्ष्मणपति-भ्रात्रादिक ]

—D12 reads $13^{cd}$ (followed by 616*) and $20^{ab}$ before 50 —$^c$) Ś Ñ2 V1 2 B2—4 D5—8 9 10 12 13 अव(B4 एव)तताराशु D6 च वदनादाशु (for अवातरच्छीघ्र) —After 13 D12 ins

616* सुवेले शैलशिखरे कृत्वा राघवसुग्रीवसंमन्त्रणं ।

14 V3 om 14 (cf v l 1) D18 om $14^{ab}$ For 14-15 Ś D9 12 subst 620* —$^a$) V1 B2 D1 T1 M3 च (for तु) —$^b$) B1 बद्ध (for शैलात्) G (ed) च (for स) —D12 reads $14^{cd}$ before $1^{cd}$ —$^c$) Ñ V1 2 B D5—8 10 परैरप्यप्रधृष्यं(V1 B1 2 °ध्य) —After 14, B3 ins , while B3 cont after 620*

617* तत सर्वाभिसारेण हरीणां पार्श्वतस्ततः ।
चैत्यानां स्वनितं तथा सदा युद्धाभिकाङ्क्षिणाम् ।

[(l 2) B3 पुनर्भवेन्नित्यं (for the prior half)]

15 V3 om 15 (cf v l 1) —$^a$) T2 3 सनह्य तु G3 M1 स सुग्रीव (for ससुग्रीव ) Ñ B1 ततस्तद्वचनं (B3 °द्रीक्ष्य) सुग्रीव , V1 2 B2 4 D5 11 सगृह्य तु स(V1 B3 4 मित्र)सुग्रीव, B4 व्यूहं व्यूह्येव सुग्रीव , D7 10 समगृह्य तु (D12 च) सुग्रीव, D6 सनाह्य स तु सुग्रीव , Cm g k t as in text —$^b$) Ñ B1 4 कपिराजो महाबल ; V1 2 B2 3 D5—8,10 सद्य रामो महाबल (D5 1 2 महद्बल, D3 महाबले) —After $15^{ab}$, V1 2 B3 (followed by 617*) ins only l 2 of 620* and then cont

618* ततस्तदुक्त सुग्रीव कपिराजो महाबल ।

—After $15^{ab}$, D12 ins.

619* अथ कार्यं विचार्यैव सुग्रीवो वानरेश्वर ।

—D6 2 om $15^c$-$16^b$ —$^c$) Ñ V1 2 B D12 राघवस्याज्ञां (D12 °ज्ञे), T3 राघवं काले, M3 राघव काले, G (ed) राघवो वीर —$^d$) Ñ V2 3 B1 2 युद्धाकाङ्क्ष्यभ्युदे(V3 °श्री सर्व)स्तव, B4 D12 युद्ध(D12 °द्र)काङ्क्षी प्रतीक्ष(D12 °क्ष)ते —For 14-15 Ś D9 12 subst , D3 subst for 15 while V1 2 B3 (followed by 617*) ins. only l 2 after $15^{ab}$

620* वधाय राक्षसेन्द्रस्य रावणस्य दुरात्मन ।
परिक्षिप्य तदा लङ्कां युद्धायाभिससार ह ।

[(l 2) V1 2 B3 परिवार्य (for °क्षिप्य)]

—Thereafter Ś D9 12 read 23

—After 15 Ñ V1 2 B ins while D12 ins l 2-4 only after 16

621* व्यूह्य तद्वानर सैन्यं प्रापो लङ्कां पुरीं प्रति ।
चतुर्गोपाङ्गुलित्राणौ धनुर्बाणासिधारिणौ ।
दिव्यशरप्रासयात्रधरावुभौ ।
पुरस्कृत्य महावीर्यौ भ्रातरौ रामलक्ष्मणौ ।
विभीषणेनानुगतौ प्रवीरौ पुरंगमे । [5]
तत सा हरिसैन्यानि पृतना काननौकसाम् ।
समुद्ररूपा महती लङ्कामभ्यपतत्तदा ।

[(l 1) B4 [च]नद (for तद) V1 प्राप्य (for प्रापो) —(l 2) D12 चर्मे (for चर) —(l 3) V1 2 प्रवर ; D12 ऐश्वर्य (sic) (for प्रवर) —(l 4) Ñ1 पुरस्कृत्य D12 -भ्रात्रो (for वीर्यौ) B3 भ्रातरौ (for भ्रातरौ) —B3 om l 6-7 —(l 6) V1 तु (for सा) ]

G 6.16 25
B. 6.41 33
L. 6.16 23

लङ्कायास्तूत्तरद्वारं शैलशृङ्गमिवोन्नतम् ।
रामः सहानुजो धन्वी जुगोप च रुरोध च ॥ २३

लङ्कामुपनिविश्याथ रामो दशरथात्मजः ।
लक्ष्मणानुचरो वीरः पुरीं रावणपालिताम् ॥ २४

उत्तरद्वारमासाद्य यत्र तिष्ठति रावणः ।
नान्यो रामाद्धि तद्द्वारं समर्थः परिरक्षितुम् ॥ २५

रावणाधिष्ठितं भीमं वरुणेनेव सागरम् ।
सायुधै राक्षसैर्भीमैरभिगुप्तं समन्ततः ।
लघूनां त्रासजननं पातालमिव दानवैः ॥ २६
विन्यस्तानि च योधानां बहूनि विविधानि च ।
ददर्शायुधजालानि तथैव कवचानि च ॥ २७
पूर्वं तु द्वारमासाद्य नीलो हरिचमूपतिः ।
अतिष्ठत्सह मैन्देन द्विविदेन च वीर्यवान् ॥ २८

---

23 Ś D4.8 11 read 23 after 620* —ᵃ) Ś Ñ1 V1 3 B1 2 4 D2-3 8 10 11 तूत्तर V3 B3 D4 उत्तर (for तूत्तर) Ñ2 D13 G3 लङ्कायामुत्तर —ᵇ) Ñ1 B1 3 मेरो शृङ्गम्, Ñ2 गिरिशृङ्गम् (for शैल°) Ś Ñ D1-3 D8 11 [उ]च्छ्रित, D0 [उ]च्चत (for [उ]न्नतम्) —ᵈ) Ś1 जगाम (for जुगोप) N B1-3 transp जुगोप and रुरोध

24 ᵃ) D10 11 तु G1 3 M1 3 4 [ऽ]भूद् (for च) —ᶜ) G1 राम (for वीर) ❀ Cv लक्ष्मणानुचरो वीर इति सम्यक्। लक्ष्मणानुचरो राम इति पाठेऽप्ययमर्थ एव।, Cr g लक्ष्मणानुचरो वीर इति पाठ। Cr adds लक्ष्मणानुचरो राम इति पाठे रमयतीति व्युत्पत्त्या राम विशेषणम् ❀ —For 24 Ś N V B D2-4 8 11 12 subst

625* लङ्कामुपनिविष्टे च रामे दशरथात्मजे।
लक्ष्मणानुचरे वीरे व्यथिता सराक्षसा।

[(l 1) V D1 2 12 तु (for च) B4 लङ्कामुपनिविष्टे तु D3 लङ्कामुपनिविष्टे च D13 लङ्कामूले निविष्टे तु (for the prior half) —After l 1 N V2 B1-3 ins

625(A)* लङ्कामुपनिविष्टश्च निशाचरा।

—(l 2) D8 व्यथिता (for व्यथिता) V1 3 D2 3 11 चैकता (for राक्षसा) B4 विव्यथुश्च निशाचरा (for the post half) ]

—Thereafter N (Ñ2 only l 1 followed by 624*) V2 B1-3 cont while B4 D2 3 ins. l 1 and l 2 after and before 25ᵃᵇ respy

626* अमरविनिर्जिताश्च वानरगणाधिपा।
राक्षसा राक्षसेन्द्राय रावणाय न्यवेदिरे।

[(l 1) B4 निर्जितश्चोमरगण D13 निर्जितसमरदाच (for the prior half) B1 3 ताश्च B4 -नर्ते सह D2 3 -नराधिपा (for गणाधिपा) —Ñ1 V2 B1 om B2 reads in marg from l 2 up to 25ᵇ D13 चक्रे सह (for न्यवेदिरे) ]

25 Ś N V B1 D2-4 8 11 om B2 reads in marg 25ᵃᵇ (for Ñ1 V2 B1 3 cf N l 626*) B2 3 D12 ins l 1 and l 2 of 626* after and before 25ᵃᵇ respy —ᵃᵇ) D4 उत्तरं द्वारम्, D11 उत्तरोत्तरम् B2-3 D13 उत्तरं तु पुर(B4 समय उत्तर)द्वारं राघव (D13 सामान्य) परिरक्षति —ᶜ) B4 न यो B4 D9 13 ऋते (for हि तद्) G1 रामो नान्याद्धि तद्द्वार (sic) —ᵈ) B4 न शक्त (for समर्थ)

26 ᵃ) D1 रावणानुष्ठित Ś Ñ V1 3 B D9 1 4 6 12 13 तद्धि, D3 तथा (for भीम) —ᵇ) Ś1 B4 [प्]व (for [इ]व) —ᶜ) Ś Ñ V B D0-4 8 11 12 13 राक्षसै सायुधैरथैर् (Ñ2 °श्चोभैर्, V °वीरैर् B4 °श्चैव [with hiatus]) —ᵈ) Ś D3 अभिरक्षितं, D4 T2 त्वभिगुप्त —ᵉ) Ś V D0-4 8 12 13 वीर्यविक्रमसपन्नै —After 26 Ś N V B1 2 4 D0-4 8 12 13 ins.

627* राक्षसैर्विविधाकार शुशुभे सा महाचमू।
समन्ताद्द्रुमैर्गुप्ता सर्वभोगवती यथा।

[(l 1) V1 3 बहुधाकारे Ñ1 महायुधे, Ñ2 V B1 2 4 D4 महाश्वे D2 महापुरी, G (cd) महाचरे (for महाचमू) —(l 2) Ś D3 4 10 समन्तैर् (for समन्तात्) Ś D2 4 8 11 12 नागैर् (for सर्वै) D0 भोगवतीमिव ]

27 ᵃ) D3 वि वक्षानां G1 यूथानि M4 यूथानां (for योधानां) —ᵇ) D6 विविधानि बहूनि (by transp) —ᶜ) D13 तथापि, M1 शालानि (for जालानि) —ᵈ) D4 T2 M1 तथैव G1 छोद्दानि (for तथैव) N D1 3 4 कवचानि महान्ति च B3 महान्ति कवचानि च D13 वीरयाणि विचित्राणि च G1 भीमानि निर्मितानि च M3 भीमानि च वासानि च —For 27ᶜᵈ Ś V1 3 D0-4 8 13 subst N V1 B1 2 4 D13 (after 27ᵃᵇ) ins after 27

628* ददर्शायुधजालानि चित्राणि ददृशे तदा।

[Ś V3 B3 D4 8 13 ददर्श (V3 D8 °श्च) चायुध, Ñ2 V1 ददर्श तायुध Ś D0 4 8 13 जालानि (for जालानि) D3 तत्र सायुधजालानि (for the prior half) V1 ददृशु, D3 पुनः (for ददृशे) Ś D2 4 13 विविधानि धनूंषि च (for the post half) ]

28 ᵃ) Ś D4 8 13 ततस्तस्य V ततस्तु D3 4 8 ततश्च (for आसाद्य) Ñ B पूर्व (B4 पूर्व)द्वारसमासाद्य (B3 °द्य) D4 पूर्वद्वारं समासाद्य, G1 3 M3 पूर्वद्वारं समासाद्य —ᵇ) V नीलश्च (V3 °श्च) हरियूथप —ᶜᵈ) Ś N V B D0-4 8 12 13 मैन्देन द्विविदेनाथ (Ś V3 B3 D4 8 12 °श्च) सह (Ś D4 8 13 यथा) विविधवीर्यवान्

अङ्गदो दक्षिणद्वारं जग्राह सुमहाबलः ।
ऋषभेण गवाक्षेण गजेन गवयेन च ॥ २९
हनूमान्पश्चिमद्वारं ररक्ष बलवान्कपिः ।
प्रमाथिप्रघसाभ्यां च वीरैरन्यैश्च संगतः ॥ ३०
मध्यमे च स्वयं गुल्मे सुग्रीवः समतिष्ठत ।
सह सर्वैर्हरिश्रेष्ठैः सुपर्णश्वसनोपमैः ॥ ३१
वानराणां तु षट्त्रिंशत्कोट्यः प्रख्यातयूथपाः ।
निपीड्योपनिविष्टाश्च सुग्रीवो यत्र वानरः ॥ ३२
शासनेन तु रामस्य लक्ष्मणः सविभीषणः ।
द्वारे द्वारे हरीणां तु कोटिं कोटिं न्यवेशयत् ॥ ३३
पश्चिमेन तु रामस्य सुग्रीवः सहजाम्बवान् ।
अदूरान्मध्यमे गुल्मे तस्थौ बहुबलानुगः ॥ ३४
ते तु वानरशार्दूलाः शार्दूला इव दंष्ट्रिणः ।
गृहीत्वा द्रुमशैलाग्रान्हृष्टा युद्धाय तस्थिरे ॥ ३५
सर्वे विकृतलाङ्गूलाः सर्वे दंष्ट्रानखायुधाः ।
सर्वे विकृतचित्राङ्गाः सर्वे च विकृताननाः ॥ ३६

G. 6.16.40
B. 6.41.46
L. 6.16.37

29 a) B2.3.4 दक्षिणं द्वारं. — b) T2 G3 जगाम (for जग्राह). Ś D4.8.12.13 अगृह्णे पुत्रवान्वितः (D13 °वृतः); Ñ1 B2-4 अरक्षदृक्षयूथैः सह (B3 °शेखरः); V D6-8 जग्राह (V सुषेण) पुत्रवान्वृतः; B1 अरक्षत्पृतनया सह (hypm.); M3 जगाम स महाबलः. — d) Ñ2 V1 B गयेन (for गजेन). Ñ V B D6 पनसेन; D11 गगनेन (for गवयेन). D9 वा (for च). D1 गयेन पवनेन च.

30 a) Ñ V1.2 B2.4 D6.1.11.13 पश्चिमं द्वारं. — b) B2 अरक्षद् (for ररक्ष). D3 पवनात्मजः; G2 M1.2 सुमहाबलः (for बलवान्कपिः). — c) B2 सोमाधि-; D7.10.11 T2 प्रमेथ-; G2.3 M1.2 प्रथा(G2 °मा)स-; M3 प्रसाद- (for प्रमाथि-). Ñ1 B3 -प्रमथाभ्यां; B1 -प्रभवाभ्यां; B4 -क्रमणाभ्यां; D7.10.11 -वरसाभ्यां (for -प्रघसाभ्यां). B1 प्रमाथिप्रभवाभ्यां; D9 प्रमाथिप्रसवाभ्यां. — d) Ñ B2-4 चान्यैश् (for अन्यैश्). Ñ1 B संवृतः; Ñ2 संयुतः; G1 संगतैः. — For 30cd, Ś V D6-1.8.11.13 subst.; B2 G3 M4 ins. after 30cd:

629* प्रघसश्च प्रमाथी च वज्रास्य सचिवावुभौ ।

[D11 प्रगस्यस् (for प्रघसश्). G3 प्रभासश्; M3 प्रसादश् (for प्रमाथी). V1 सुचवौ; B3 तथास्य; D1.3 ये तस्य; D12 संत्रास्य; G3 M3 तस्य (for वज्रास्य).]

—Then B3 cont.; while B2.4 ins. after 31:

630* सुषेणसहितो धीमान्सर्वैरेश्च कपीश्वरैः ।

[B4 धार्मिन् (for सुषेण-). B3 श्रीमान् (for धीमान्). B4 प्रवीरैः (for सर्वैरैः). B3 हरीश्वरैः.]

31 a) Ñ B G1 M3 तु (for च). — b) D3 समविष्ठत; G2 (after corr. as in text) M3 स ह तिष्ठति. — c) Ś Ñ V1.2 B D6-1.8.11.13 कपिश्रेष्ठैः. — d) V3 D1.10.11 G1 सुपर्ण- ; Cg as in text (for सुपर्ण-). Ś Ñ2 D4.8.13 -समविक्रमैः; V3 D1.9-12 G1.2 -पवनोपमैः. — After 31, B2.4 ins. 630*.

32 a) V1 B4 D12 च; V2 च सर्वे (hypm.) (for तु). Ś D4.8.12 षड्विंशत्-. — b) Ś D4.8.13 तैः सह; V D1.10 तैः सह; B3 विख्यात-; D12 ये हरि- (for प्रख्यात-). Ś V D6-1.8.11.13 यूथपैः; Ñ B -विक्रमाः (B1 °मैः) (for -यूथपाः). — c) D1.13 संपीड्य (for निपीड्य). Ñ2 B1 ते तु न्यवसन्; V3 [उ]पानविष्टाश्च; B2.4 ते च (B4 तु) न्यविशन्; D1.13 G1 M3 [उ]पनिविष्टास्ते (G1 M3 °स्तु); D8 [अ]पि निविष्टाश्च.

33 G1 om. 33ab. — a) Ś D4.8.12 शासनादेव; V1.2 D1-8.13 शासनादस्य. V3 शासनाद्युतासस्य; D9 (with hiatus) सा सेना अथ रामस्य. — V3 om. (hapl.) 33b-34a. — b) Ś Ñ V1.2 B D6-1.8.11.13 T1 सुग्रीवः (for लक्ष्मणः). — c) Ñ B द्वारि द्वारि. Ś Ñ V1.2 B D6-1.8.11.13 G2 M3 प्लवंगानां; D8 प्लवंगाश्च; G1 च लंकायाः (for हरीणां तु). — d) Ś D4.8.13 कोटीं कोटीं; B1 D1.6.7.9-11.13 T1.2 G1.2 कोटि(D3 °टिं)कोटीर्. D1.3 G1 निवेशयत्; T2 न्यवेदयत्. — After 33, B4 ins.:

631* वानराणां तु षट्त्रिंशत्कोट्यः पादपयोधिनाम् ।
अदूरान्मध्यगुल्मस्य तस्थुर्बाहुबलान्विताः ।

[For l. 1 and l. 2, cf. 32ab and 34cd respy.]

—After 33, D4 T1 ins.:

632* दक्षिणेन तु रामस्य लक्ष्मणः सविभीषणः ।

[Cf. 33ab.]

34 V3 om. 34a (cf. v.l. 33). — b) D1.7.10.11 T1 G1 सुषेणः (for सुग्रीवः). Ś D4.8.13 सहवीधरः; B1 स च जांबवान्. — c) Ś Ñ2 V B1 D6.9-1.8.13 अदूरे; D1 गुहल्मे (sic); D11 सदूरे (sic) (for अदूरान्). V3 मध्यगुल्मे तु. — d) Ś D4.8.13 बहुबला(D8 °हु**)वृताः; G3 बहुबलान्वितः.

35 G1 transp. 35 and 36. — b) Ś D4.8.13 भ्रंशिनः (for दंष्ट्रिणः). — c) Ś D4.8.11 द्रुमशैलाग्र्यान्; V D6-8.13 M1.2.3 द्रुमशैलांश्च. ⊕ Cg: शैलान्मानिति पुंस्त्वमार्षम्. ⊕ — d) Ś V D6-8.8.13.13 सहसा योद्धुमुद्यताः; Ñ B हृष्टा(B3 हृष्टाः) योद्धु(B3 युद्ध)मुपस्थिताः.

36 G1 transp. 35 and 36. M3 reads 36 after 38. D3 reads 36cd twice. — a) G1 विपुल-; G2 विवृत-; M3 विपुल-; Cg.k.t as in text (for विकृत-). — D1 om.

G 6 16 41
B 6 41 47
L 6 16 38

दशनागबलाः केचित्केचिद्दशगुणोत्तराः ।
केचिन्नागसहस्रस्य बभूवुस्तुल्यविक्रमाः ॥ ३७
सन्ति चौघबलाः केचित्केचिच्छतगुणोत्तराः ।
अप्रमेयबलाश्चान्ये तत्रासन्हरियूथपाः ॥ ३८
अद्भुतश्च विचित्रश्च तेषामासीत्समागमः ।
तत्र वानरसैन्यानां शलभानामिवोद्गमः ॥ ३९
परिपूर्णमिवाकाशं संछन्नेव च मेदिनी ।
लङ्कामुपनिविष्टैश्च संपतद्भिश्च वानरैः ॥ ४०
शतं शतसहस्राणां पृथगृक्षवनौकसाम् ।
लङ्काद्वाराण्युपाजग्मुरन्ये योद्धुं समन्ततः ॥ ४१
आवृतः स गिरिः सर्वैस्तैः समन्तात्प्लवंगमैः ।
अयुतानां सहस्रं च पुरीं तामभ्यवर्तत ॥ ४२
वानरैर्बलवद्भिश्च बभूव द्रुमपाणिभिः ।
सर्वतः संवृता लङ्का दुष्प्रवेशापि वायुना ॥ ४३

(hapl ?) from $36^{b}$ up to -चक्रा in $37^{a}$, D1a om. (hapl) $36^{bc}$ Ñ1 reads $36^{b}$ - $37^{a}$ in marg —b) Ś V D0 1-4 8 13 दृत, D1 4 T3 G2 M1 2 दृष्ट् (for दृष्टा) —c) Ś V1 D3 1-4 8 13 वर्णाभा, V3 वक्त्राश्च (for चित्राङ्गा) G3 सर्वे विवृतवक्त्राश्च —d) V3 च विकृता मुखा; B1 विकृतानि स्वना; G1 च विवृताननाः —After 36 Ñ V3 4 B (B3 repeats after $38^{ab}$) ins., V1 ins after $38^{ab}$

633* सर्वे चैव कृतोत्साहाः सर्वे देवपराक्रमाः ।

[ Ñ1 B4 रणोत्साहा ]

37 Ñ1 reads in marg $37^{a}$ D1 om up to बला in $37^{c}$ (for both cf v l 36) V3 om $37$-$38^{b}$. —a) Ñ1 समा (for बला) —b) B4 D5 om (hapl) केचित् D11 शत (for दश) —V3 om $37^{c}$-38 —d) D0 बहवस्, D8 ब * * स् (for बभूवुस्)

38 V3 om 38 V1 om $38^{ab}$ (for both cf v l 37) B1 D3 13 transp ab and cd —a) Ś V3 D4 8 13 15 सेघ, D0 चोद्य, D1 चैक; D5 चोघ; D8 कोघ (sic) (for चौघ) Ś V1 D0 1 3 4 8 13 15 तत्र (for केचित्) D2 सन्ति पै तत्रकस्तत्र —b) D10 T3 M3 दश (for शत) M3 (before corr as in text) [ऽ]तमा Ś Ñ V1 B D0-4 8 13 15 तथा (Ñ B1 3 4 सति, B3 केचित्) वायुबलोपमा —After $38^{cd}$, V1 ins. B3 repeats 633* —B2 om $38^{cd}$ —c) V3 D11 तथा (for तत्र) D8 पुंगवा (for यूथपा) —After 38, T2 reads $41$-$42^{b}$, M3 reads 36

39 D1 om $39^{cd}$ —a) Ś D4 8 13 G1 अत्यद्भुत (G3 °तो) —d) D0 11 दारसागाद् D5 T2 3 G2 M3 [व]घम; D6 T1 M3 [ऽ]घहो (for [ऽ]द्गम) M3 दीकानामिव संगम.

40 a) Ś V1 2 D0-4 7-13 T3 M1 2 प्रति, T3 हरि (for परि) —b) Ś D4 8 13 प्रच्छन्ना; D1 10 11 सपूर्णा; D3 सक्षुर्णा (sic) (for संछन्ना) D0 [इ]दं (for [इ]व) V3 प्रविच्छन्नैव मेदिनी Cg अत्र इववाक्यद्वयमपि यावल्लङ्कारे —c) Ś V D0-4 8 13 15 प्रति, B1 इव (for उप) D1 वै (for च) —d) V3 निपतद्भिश् M1 2 प्लवगैः (for च वानरैः)

41 T2 reads $41$-$42^{b}$ after 38 —b) V3 D11 12 T1 M1 2 Ck t पृतनार्क्ष, D1 पृथुगृध (sic) D12 प्लवगर्क्ष, G3 प्रधानास्ते, Cv m g as in text (for पृथगृक्ष) D1-6 T1 G1 2 -वनौकस Ñ1 B1 3 4 वानराणां पृथक्पृथक् Cv शतं शतसहस्राणां पृथगृक्षवनौकसां । लङ्काद्वारा -- -न्ये योद्धुं समन्तत इति पाठः ।। Ct पृतना ऋक्षेत्यत्र सन्धिरार्षः —c) V3 B2 3 G1 2 लङ्काद्वारम्, D12 लङ्काद्वारेभि B1 सर्वाणि (for [उ]पाजग्मुर्) —d) Ś D4 8 13 वानरास्ते; Ñ V B2-4 D2 3 13 अन्ये जग्मु; B1 (w lb hiatus) उपाजग्मु, D6 अन्यैर्युद्धं (sic) G (ed) सर्वाणि तु (for अन्ये योद्धुं) D1 2 समन्तात् महौजसः —After 41, Ś Ñ V1 3 B D4 8 13 15 ins

634* अन्ये त्वन्येषु देशेषु सन्यस्ता सुमहाबला ।

[ Ś D4 8 13 च (for तु) Ñ1 B1 [अ]न्यत्र D12 [अ]न्य (for [अ]न्येषु) V3 B1 D12 सु (B1 न)महाबला ]

42 T2 reads $41$-$42^{b}$ after 38 —a) V3 सञ्छादयत D3 सञ्छादय, D1 सरथाय च (sic), D6 1 आच्छादयता D12 सञ्छाद्य च (for आवृत स) D0 2 सर्व (for सर्वैस्) Ś D4 8 13 छादयतो गिरिं सर्वं (D8 °र्वै), Ñ B संछन्ना नगरी लंका V3 संछादयन् गिरिं सर्वां —b) D3 समवाप्त (by transp), D3 T3 समताच (for तैः समन्तात्) V3 D4 8 13 वनालये; M3 प्रपूरित (ins later also °दूरत) (for प्लवंगमैः) Ś D4 8 13 समन्तात्(Ś1 °न्तु) वनौकस (D13 °सां) G1 दि स * * प्रपूरिता —c) V1 B3 D1 T3 G2 तु (for च) —d) Ś Ñ1 V1 3 B D4 8 13 15 लंकां (for पुरीं) Ś V D0 4 8 12 13 15 समं (V3 ताम) निपतता D1 पुरामिवतता D1 G3 तामत्य(G3 °न्य)पतत (for तामभ्यवर्तत) Ñ1 लङ्कायामभ्यवर्तत

43 a) D0 2 4 13 स्या (for च) —c) D1 11 T1 M3 संवृता सर्वतो लंका —d) V3 4 D5-8 13 15 दुष्प्रवेशा Ñ1 B1 D8 च D12 [अ]पि (for [अ]पि)

G 6.16 0
B 6.41 58
L 6.16 51

राघवः संनिवेश्यैवं सैन्यं स्वं रक्षसां वधे ।
संमन्त्र्य मन्त्रिभिः सार्धं निश्चित्य च पुनः पुनः ॥ ४८
आनन्तर्यमभिप्रेप्सुः क्रमयोगार्थतत्त्ववित् ।
विभीषणस्यानुमते राजधर्ममनुस्मरन् ।
अङ्गदं वालितनयं समाहूयेदमब्रवीत् ॥ ४९
गत्वा सौम्य दशग्रीवं ब्रूहि मद्वचनात्कपे ।
लङ्घयित्वा पुरीं लङ्कां भयं त्यक्त्वा गतव्यथः ॥ ५०
भ्रष्टश्रीक गतैश्वर्य मुमूर्षो नष्टचेतन ।
ऋषीणां देवतानां च गन्धर्वाप्सरसां तथा ॥ ५१
नागानामथ यक्षाणां राज्ञां च रजनीचर ।
यच्च पापं कृतं मोहादवलिप्तेन राक्षस ॥ ५२
नूनमद्य गतो दर्पः स्वयंभूवरदानजः ।
यस्य दण्डधरस्तेऽहं दाराहरणकर्शितः ।
दण्डं धारयमाणस्तु लङ्काद्वारे व्यवस्थितः ॥ ५३
पदवीं देवतानां च महर्षीणां च राक्षस ।
राजर्षीणां च सर्वेषां गमिष्यसि मया हतः ॥ ५४

48 N B om 48[ab] D13 reads 48[ab] and 81[ab] before 45 —[a]) Ś D6 1 3 4 8.11 13 तन्निवेश्य D10 11 G1 [य]त्र —[b]) D4 सैन्य स्वं च (hypm), D7 10 12 G M5 स्वसैन्य, M1 3 बलं स्व (for सैन्य स्व) V1 सैन्य सर्वत्र वीर्यवान् —After 48[cd], V2 repeats 639* —V2 reads 48[cd] after the first occurrence of 639* repeating it here D13 reads 48[cd] after 16[ab] —[c]) N B काले (for सार्धं)

49 D13 om 49 —[a]) V2 आ(म)नन्तरम्, D4 अनन्तरम् (for आनन्तर्यम्) —[b]) Ś D8 12 क्रमयोगस्य, V1 3 B1 2 क्रमयोगाच्च, T1 समयोगार्थं —[c]) Ñ2 [अ]भिमते Ś D8 12 विभीषणमते तिष्ठन् —[d]) D4 वालिपुत्र तु —[f]) Ś V D0-4 8 12 [अ]ब्रवीद्वच (for [इ]दमब्रवीत्) ※ Cm धर्मं राजमनुस्मरन्निति पाठे राजदन्तादित्वात् धर्मशब्दस्य पूर्वनिपात । विभीषणस्य अनुमते अनुमतौ सत्याम् अङ्गद समाहूयेदमब्रवीदिति संबन्ध । विभीषणमते स्थित्वेति पाठे युद्धे रावणो भवन्त शरण प्राप्नुयाद्यदि तदा लङ्काराज्य तस्यैव दातव्यमित्येवरूपे विभीषणमते स्थित्वेत्यर्थ ※ —After 49, D4 ins an addl colophon

[*Kanda name* सुन्दरकाण्डे —*Sarga name* बल-निवेश ]

50 Before 50, D13 reads 13[cd] (followed by 616*) and 20[ab] —[a]) Ś Ñ V1 B1.4 D1-4 8.12 13 गच्छ सौम्य, D9 गच्छस्वेन D4 om दशग्रीव —[b]) Ś Ñ V B D0-4.8.9 11 13 G1 3 इद (for कपे) —[c]) T1 [अ]र्णव (for पुरीं) —[d]) V1 त्यज्य B4 -पस्तो (for त्यक्त्वा) D4 ग * * थ . —After 50, D4 ins.

640* क्रूरं प्राण्यसुखावहं सर्वभूतभयावहम् ।

51 [a]) Ś V D0-4.8 11.13 भ्र(D13 न)ष्टैश्वर्यं गत(D9 1 °त)श्रीकं, Ñ B D1-11 G1 भ्रष्टश्रीक(B1 °द्वार) गतैश्वर्य —[b]) Ś Ñ V B D0 1 3-12 G1 मुमूर्षुं(Ñ1 V1 D10.11 °र्षो) नष्ट(V1 भ्रष्ट V1 मत)चेतसं(Ś1 N V1 B1 D0-11 12 G1 °नं) —After 51[ab], D1 reads 54 —[c]) Ñ B3-4 मुनीनां (for ऋषीणां). D1 T1 दानवानां D7 दैत्यानां B1 transp. ऋषीणां and देवतानां D9 ऋषिणामेव मे यस्य —[d]) G1 यपि (for तथा) D6 T1 महर्षीणां च कन्क —After 51, B1 ins

641* राजर्षीणां च सर्वेषां नागानां च महात्मनाम् ।

52 D1 T1 om 52 —[a]) M1 3 अपि (for अथ) Ñ2 (also) यक्षाना; D13 सुपर्णा (for यक्षाणा) V2 नागगन्धर्वयक्षाणां —[b]) V1 रक्षसा (for राज्ञां च) —[c]) Ś N V B1 3 4 D0 2-4 8 12 13 यत्त्वयापकृ(Ś V1 3 D1-4 8.12 13 °कृ)त मोहात्, B2 D4 यत्त्वया प्रकृत(B2 °ति) मोहात् —[d]) D1 अवलिप्तोऽसि V1 B1 D4 7 13 रक्षसा, D13 चेतसा D9 रक्षसः, M1 3 च त्वया (for राक्षस) —After 52, D7 G1 ins

642* तस्य पापस्य संप्राप्ता व्युष्टिरद्य दुरासदा(G1 °द) ।

53 [ab]) Ś V D0-3 8 12 13 T1 तेऽद्य, D7-11 ते वि, T1 G M1 3 4 त्वद्य, Cr m t as in text (for अद्य) D1 धर्मस्योच्छेदन कृत्वा (for [a]) D1 4 8 T1 परदानज ; Cr m g t as in text (for °दानज) Ñ B तेन (Ñ1 B4 नूनं) च जनितो दर्पो वरदानात्स्वयंभुव —[c]) Ś Ñ V1 3 B D0-4 8 11.13 G1 तस्य (for यस्य) V2 दर्पहस्तेऽ B1 दण्डहस्तेन, B4 दण्डहस्ते D1 G1 दंडदास्य (for दण्डधरस्ते) —[d]) Ś V2 3 D0-4 8.13 भार्या (for दारा) Ś V D1 3 11 12 -कर्षित, Ñ B3-4 पीडित, B1 -चोषित ; G(ed) शोषित (for -कर्शित) —G1 om 53[e]-54 —[e]) Ś Ñ1 V B1-3 D0-4 8 12 13 दृढं धारयितुं दण्डं (Ñ1 B1 3 दण्डो; V1 दीक्षणो), Ñ1 B4 दशानन(B4 °ननो)-रयितुं शक्तो —[f]) N B1 3 4 D13 द्वारि (for द्वारे) D13 प्रतिष्ठित B4 लंकाद्वारमुपस्थित

54 G1 om 54 (cf v l 53) D1 reads 54 after 51[ab], —[a]) V1 भानुभं (for पदवीं) D4 T1 दैवतानां —[b]) D4 राजर्षीणां D7 गंधर्वाणां M1 2 देवर्षीणां (for महर्षीणां) D9 रक्षसां (for राक्षस) —[c]) D4 महर्षीणां (for राज°) —[d]) V2 D1 4 7 8 T2 G2 3 M2 युधि स्थित ; D10.11 T2 युधि स्थित (for मया हत ). Ś Ñ V1 3 B D1-4 8.12 13 गमिष्यसि युधि स्थित ; D9 यास्यसि युधि स्थित .

बलेन येन वै सीतां मायया राक्षसाधम ।
मामतिक्रामयित्वा त्वं हृतवांस्तद्विदर्शय ॥ ५५
अराक्षसमिमं लोकं कर्तास्मि निशितैः शरैः ।
न चेच्छरणमभ्येषि मामुपादाय मैथिलीम् ॥ ५६
धर्मात्मा रक्षसां श्रेष्ठः संप्राप्तोऽयं विभीषणः ।
लङ्कैश्वर्यं ध्रुवं श्रीमानयं प्राप्नोत्यकण्टकम् ॥ ५७
न हि राज्यमधर्मेण भोक्तुं क्षणमपि त्वया ।
शक्यं मूर्खसहायेन पापेनाविजितात्मना ॥ ५८
युध्यस्व वा धृतिं कृत्वा शौर्यमालम्ब्य राक्षस ।
मच्छरैस्त्वं रणे शान्तस्ततः पूतो भविष्यसि ॥ ५९
यद्याविशसि लोकांस्त्रीन्पक्षिभूतो मनोजवः ।
मम चक्षुष्पथं प्राप्य न जीवन्प्रतियास्यसि ॥ ६०
ब्रवीमि त्वां हितं वाक्यं क्रियतामौर्ध्वदेहिकम् ।
सुदृष्टा क्रियतां लङ्का जीवितं ते मयि स्थितम् ॥ ६१

G 6. 16. 74
B 6. 41. 72
L 6. 16. 66

55 ᵃ) D5 छलेन (for बलेन) N2 तेन Ś N2 V D1.3 G1 मे सीता, Ñ1 B2-4 ते सीता B1 D6.7.4.8.12 मे सीता, D9 G3 पै सीता, D10 सा सीता, G2 M1.2 वैदेही (for वै सीतां) —ᵇ) V2 कृता ते, V3 [अ]पकृता B3 (*sup lin* as in text) [अ]पहृता (for मायया) D1.7 राक्षसाधिप —ᶜᵈ) D6.12 मामप, D5 मामपि, T3 मामभि (for मामति) Ś D6.7.8.10.12.13 क्रमयित्वा, T2 द्राव°, M3 ध्राव° (for क्रामयित्वा) D13 तु M5 तु (for त्वं) D2 मायया क्रामयित्वा त्वं (for ᶜ) D2.6.11 नि(D6.8 हि)-दर्शय N V2 B मामप(Ñ2 °मपा V3 B2.3 °मुप, B4 °मति) क्रम्य सा त(B4 य)स्मान्नीता काननादह ॐ Cg अतिवाम यित्वा अपवाह्य । दयग्भाव आर्ष ॐ —For 55ᶜᵈ V1.2 subst V3 ins after 55ᵃᵇ

643* बद्धक धाय मे दह सवथा दुष्ट दर्शय ।

[V3 दुष्ट सन् and दृष्ट (for मे दुष्ट and दुष्ट)]

56 ᵇ) Ñ B करोमि (for कर्तास्मि) —ᶜ) Ś D6.12 नो चा; V3 D6 नो चेच् (for न चेच्) V3 अभ्युपेहि (hypm) B1 अभ्येहि, D6.8 M1 अभ्यैपि D5 आगच्छ D11 अभ्येपि (for अभ्येषि) —ᵈ) Ś1 N1 B3 D6 सा(Ś2 N2 स)मुपादाय; V1 D3.9.11 सामादाय तु(D1 च) (for मामुपादाय) —After 56 Ś N V B D6.8.12.13 ins

644* लङ्कैश्वर्यं परित्यज्य हृतराज्यो हतात्मन ।
रक्षस्व जीवितं मूढ मम निर्यास्य मैथिलीम् ।

[(l. 1) Ś D6 लोकैश्वर्यं B1 हृतदारा (for °राज्यो) V1 हृतात्मन D3 हतात्मन (for हतात्मन) D1 हृतराज्यो हतस्तु न (for the post half) —(l. 2) V1 मूल (for मूढ)]

57 D6 om 57–58ᵇ —ᵃ) D5 धर्मार्थ (for धर्मात्मा) D6.10 G1.2 राक्षस ; D1 राक्षस D12 एषां (for श्रेष्ठ) —ᵇ) V1.2 समाप्तोऽत्र M1.2 Ct इह प्राप्तो —ᶜ) Ś1 B3 महच्च ; Ś2 N V B1.4 D2.4.8.10.11 महद् । B2 D10.12 M1.2 द्रव (for ध्रुवं) Ś2 N V B1.4 D1-4.8.11.12 धीमान् (for श्रीमान्) —ᵈ) B2 D10.11 ध्रुवं; Cr m g as in text (for अयं) T1.2 G1 M3 Cm प्राप्ते हि; Cv r g t as in text (for प्राप्नोति) Ś N V1.2 B1.2 D2.3.10.11 मद्(Ś2 स ग्; Ñ2 भाग्य; D11 सुग्)स पालयिष्यति V3 B1 D1.2.3 समग्रं(V3 मद्युग ; B2 महद्यः D2 महत्व) पा(D1 मू)लयिष्यति ॐ Ck ध्रुवं प्राप्नोत्यकण्टकमिति सर्वे पाठः ॐ

58 D6 om 58ᵃᵇ (cf v l 57) —ᵃ) V1.2 च (for हि) —ᵇ) Ñ B चिरमिह(B4 °द) (for क्षणमपि) V3 reads after णमपि त्वया in marg —ᶜ) B3 मृदुसहायेन (for मूर्ख°) —ᵈ) Ś दुष्टेन, V B4 D6-8.12.13 हतेन; B1-3 दुष्टेन (for पापेन) D6.7.8.11 T1.2 M3.5 [अ]विदितात्मना (for [अ]विजि°)

59 V3 damaged for 59ᶜᵈ —ᵃ) Ñ B1.2.4 [आ]यां मतिं B3 वा मतिं, D10.11 मा धृतिं (for वा धृतिं) D4 स्थिरो भूत्वा (for धृतिं कृत्वा) ॐ Ck युध्यस्व मा धृतिमिति पाठः I, so also Ct ॐ —ᵈ) G2 धैर्यम् (for शौर्यम्) M1.2 राक्षसैः सह रावण —ᶜ) V3 damaged for त्वं रणे शान्त D5 T1 G1.2 M3 तु (for त्वं) N1 B1.4 हत ; B2.3 हत (for रणे) —ᵈ) Ñ B1.4 हत, B3 मृत ; D3 हत (for तत ) D6.11 Ct शान्तो, Cg as in text (for पूतो) Ś D6.13 वत शान्तिर्भविष्यति

60 ᵃ) V अथा; B1 G2 यस्या; D1 यथा D5 T3 M3 यद्वा, D11 यद्वा Ct as in text (for यद्यि) G2 [आ]विशसि —ᵇ) Ś Ñ2 V B1.4 D6.8.12.13 G1 M3 पक्षी भूत्वा, N1 B3 पक्षीभूय B2 D2.4.11 T1.2 G3 M3 पक्षीभूतो, D5 पक्ष भूतो D1-3.13 निशाचर (for मनोजव) —ᶜ) D3 चाणपथ —After पथ D1 repeats erroneously from प्राप्तोऽयं विभीषण in 57ᵈ up to पथं in 60ᶜ Ś D6.13 प्राप्तो (for प्राप्य) —ᵈ) G1 प्राप्तमोक्ष्यसे Ś D6-8.12.13 न हि(D1 ता D5 ते) जीवन्विमोक्ष्यसे N B नैव जीवन् गमिष्यसि; V1.2 न जीवन्मोक्ष्यसे क्वचित् ; V3 न स जीवन्विमोक्ष्यसे

61 ᵃ) Ś D11 M1.2 त्वां (for त्वां) —ᵇ) Ś2 D6.13 T1.2 M3 Cg k ऊ(Ś1 D6.13 T2 M3 Cg k ओ)र्ध्वदेहिक —ᶜ) Ś V1.2 D6.8.12.13 सुदृष्टः ; V3 सदृष्ट ; D1 सुदृष्ट । D2 सुदृष्ट ; D7 T2 सुदृष्टा D11 सुदृष्टा D13 सुदृष्टा Cm g t as in text (for सुदृष्टा) Ś1 V D6-8.13 लोको, Ś2 D2 लोक (for लङ्का) D6 सुदृष्टा क्रियतां एका —ᵈ) N1 B3 तं स्थितं मयि (by transp ) N2 मयि ते स्थितं (by transp ), D2 M3 च मयि स्थितः D1.4 मयि समस्थितं G (ed) त दुर्लभं (for ते मयि स्थितम्) B1 जीवितात् मयि स्थितं

G 6 16 71
B 6 41 73
L 6 16 67

इत्युक्तः स तु तारेयो रामेणाक्लिष्टकर्मणा ।
जगामाकाशमाविश्य मूर्तिमानिव हव्यवाट् ॥ ६२
सोऽतिपत्य मुहूर्तेन श्रीमान्रावणमन्दिरम् ।
ददर्शासीनमव्यग्रं रावणं सचिवैः सह ॥ ६३
ततस्तस्याविदूरेण निपत्य हरिपुंगवः ।
दीप्ताग्निसदृशस्तस्थावङ्गदः कनकाङ्गदः ॥ ६४
तद्रामवचनं सर्वमन्यूनाधिकमुत्तमम् ।
सामात्यं श्रावयामास निवेद्यात्मानमात्मना ॥ ६५
दूतोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः ।
वालिपुत्रोऽङ्गदो नाम यदि ते श्रोत्रमागतः ॥ ६६
आह त्वा राघवो रामः कौसल्यानन्दवर्धनः ।
निष्पत्य प्रतियुध्यस्व नृशंस पुरुषाधम ॥ ६७
हन्तास्मि त्वां सहामात्यं सपुत्रज्ञातिबान्धवम् ।
निरुद्विग्नास्त्रयो लोका भविष्यन्ति हते त्वयि ॥ ६८
देवदानवयक्षाणां गन्धर्वोरगरक्षसाम् ।
शत्रुमद्योद्धरिष्यामि त्वामृषीणां च कण्टकम् ॥ ६९
विभीषणस्य चैश्वर्यं भविष्यति हते त्वयि ।
न चेत्सत्कृत्य वैदेहीं प्रणिपत्य प्रदास्यसि ॥ ७०

62 [cd]) D₆ हि (for तु) B₃ M₃ रामेण तारेयो (by transp) B₁ -कारिणा (for -कर्मणा) —After 62[cd], D₄ ins

645* रामं प्रदक्षिणं कृत्वा शिरसा चाभिवाद्य च ।

—[d]) Ś₁ D₁ ₃ ₅ हव्याद्, N B पावक (for हव्यवाट्)

63 [a]) Ś₁ Ñ₁ V B D₅ ₃ ₄ [ऽ]भिपत्य, Ś₂ D₇ ₈ ₁₂ ₁₃ [ऽ]भिपुप्लु, N₂ [ऽ]भिपत्य, B₂ (sup lin also) [ऽ]भिपात्य, D₄ निपत्य, D₉ [ऽ]भिपत्य G₁ ₂ M₁ [ऽ]भिगम्या M₃ [ऽ]तिपश्य; Cm g l t as in text (for ऽतिपत्य) —[b]) Ś Ñ₁ V B D₃ ₄ ₅ ₁₁ M₁ ₂ श्रीमद्; Cg as in text (for श्रीमान्) —After 63[ab], D₄ ins

646* सत्वरेण प्रविष्टस्तु भवत्या प्राकारतोरणम् ।

—After 63[cd] D₁₂ ins a long passage relegated to App I (No 20)

—[cd]) Ñ V₁ ₂ B₂ D₆₋₈ ₉ ₁₃ G₁ ₂ M₁ मध्यस्थं, V₃ अंतस्थं, B₁ मचस्थ T₁ स्वप्नो (for मध्यग्रं) Ś₁ ददर्शासीनमध्यस्थं (for *) D₁₃ अंगदो राक्षसं भीमं च ददर्श महाबलं

64 [a]) D₁₁ तथा (for तस्य) Ś D₁ ₁₂ [अ]विदूर सः Ñ₂ B₃ °दूरे चैः N₃ B₁ ₂ ₄ °दूरेसो, V₁ °दूरे चः V₃ D₃ °दूरे तु V₂ D₁ ₅ ₆ ₇ T G₁ ₂ M °दूरे स, D₁ विदूर सः D₂ विदूरे सः D₁₃ G₃ °दूर सन् (for [अ]विदूरेण) —[b]) Ś V D₁₁ ₁₂ हरिराजः, D₃ ₄ ₁₃ °राड्गुरः G (ed) °यूथप (for हरिपुंगवः) D₂ सन्निपत्य हरिप (s c) —D₃ om 64[cd] —[c]) N B तस्थौ (B₁₋₃ °स्थौ) दीप्ताग्निसम (B₁ °सौ च) —[d]) Ñ B तोंगद Ś D₁ ₁₁ काञ्चनांगद (for कनका°)

65 Ñ V₁ B स तद्रामवच सर्वम् —[c]) Ś₁ मन्युना: D₁ अन्येन (for अन्यून) —D₁₃ om (hapl) from सुमुखे up to (आ)त्मान in 65[d] —[d]) Ś D₁₋₄ ₅ [अ] भिक्रम् (for [आ]त्मानम्) D₂ कुम्भैः M₃ भाग्यवान् (for आत्मना) V नाम विश्राव्य चात्मन

66 [a]) D₁₁ G₁ M₁ ₂ ₃ कौसलेंद्रस्य —[d]) N₁ B₁ ₄ श्रुतिम् (for श्रोत्रम्)

67 [a]) B₁ भद्र (s c) D₉ प्राह (for आह) G₂ त्वां (for त्वा) V₃ G₁ राजा, M₁ ₂ वीर (for राम) —[b]) V B D₃ G₁ ₂ M₁ ₂ ₃ [आ]नंदिवर्धन —[c]) Ñ₁ V₁ ₂ D₆ ₈ ₁₁ ₁₃ निपत्य, B₄ D₁ ₃ निसृत्य, G₂ M₃ तिष्ठ त्वं, Cm g t as in text (for निष्पत्य) Ñ V B D₆ ₁₃ युधि (for प्रति) Ś D₁ ₁₂ त्वयं निगत्य युध्यस्व —[d]) B₂ सहसा (for नृशंस) N₂ D₁₁ नृशंस पुरुषो भवान्; V B₁ ₃ D₆ ₂ ₄ ₆ ₇ ₁₀ ₁₁ M₂ Cm g t नृशंस पुरुषो भव; B₄ भूत्वा सपुरुषो भव G₁ नृशंस पुरुषाद्रक ※ Cg पुरुषाधमेति पाठे पुत्रेणपरोपेऽस्थानिगमने नूनं पुरुषाधम एवासीति भाव ※

68 [a]) Ś V₁ ₃ D₃ ₁ ₈ ₁₂ M₁ ₂ हंतास्मि त्वां Ñ B मई हत्वा V₂ D₁₀ T₁ ₂ हत्वा हि त्वा (T₂ ₃ त्वां) D₁₁ हत्वाई त्वां (for हन्तास्मि त्वां) G₁ हंतास्मि हि त्वां सामात्यं —[b]) Ś₁ सपुत्र D₉ T₁ ₂ समित्र Ś N V₁ ₂ B₁ ₂ D₁₋₄ ₁₂ भ्रातृबान्धवं; B₁ -सहदा°; D₆ पशुवा° (for ज्ञातिबान्धवम्) D₁₂ सपुत्र भ्रातृमपुत्र —[c]) Ś D₁ ₁₂ निरुद्वेगास्

69 D₉ om (hapl) 69-70[ab] —[b]) Ś Ñ₁ V₁ ₂ B D₆₋₈ ₁₂ पक्षिणां (for रक्षसाम्) —[c]) Ś V B₃ D₆₋₈ ₁₂ ₁₃ शल्यमद्य, N B₁ ₂ ₄ त्वां शत्रुम्; N₂ (m also) त्वां शत्रुम् (for शत्रुमद्य) —[d]) T₂ तम् (for त्वाम्) Ś V D₆₋₈ ₁₂ ₁₃ मुनीनां चैव (V₂ दव, D₁ °नामपि) कण्टकं Ñ B सर्वकेनकमपि

70 D₆ om 70[cd] (cf v l 69) Ñ B₁ ₃ ₄ transp [ab] and [cd] D₁₀ reads 70 in marg —[ab]) D₆ ₁₁ वा (for च) Ñ B विभीषणाय दास्ये त्वं (G [ed] त्वां) राज्यं दास्यामि रावण —[c]) D₁₂ सकृत् यत् (for सत्कृत्य) —[d]) Ś₁ B₁ D₆ ₁ प्रदास्यसि —After 70 D₁ ins

647* यथा विदेहितां सीतां लक्ष्मणेन तु रावण ।
सा पानां दुःखे यास्यं सुभाग किं न बध्यसे ।
मत्तस्य परेशा सीता धाराणाद्वक्षोरसः ।
न चैव त्वं पश्यामि श्राम्येके निराश्रयः ।

इत्येवं परुषं वाक्यं ब्रुवाणे हरिपुंगवे ।
अमर्षवशमापन्नो निशाचरगणेश्वरः ॥ ७१
ततः स रोषताम्राक्षः शशास सचिवांस्तदा ।
गृह्यतामेष दुर्मेधा वध्यतामिति चासकृत् ॥ ७२
रावणस्य वचः श्रुत्वा दीप्ताग्निसमतेजसः ।
जगृहुस्तं ततो घोराश्चत्वारो रजनीचराः ॥ ७३
ग्राहयामास तारेयः स्वयमात्मानमात्मना ।
बलं दर्शयितुं वीरो यातुधानगणे तदा ॥ ७४
स तान्बाहुद्वये सक्तानादाय पतगानिव ।
प्रासादं शैलसंकाशमुत्पपाताङ्गदस्तदा ॥ ७५
तेऽन्तरिक्षाद्विनिर्धूतास्तस्य वेगेन राक्षसाः ।
भूमौ निपतिताः सर्वे राक्षसेन्द्रस्य पश्यतः ॥ ७६
ततः प्रासादशिखरं शैलशृङ्गमिवोन्नतम् ।
तत्पफाल तदाक्रान्तं दशग्रीवस्य पश्यतः ॥ ७७

G 6 16 90
B 6 41 89
L 6 16 82

त्वया चेन्मम प्रत्यक्षं हृता स्वाज्ञानकात्मना । [ 5 ]
श्लाघ्यते तव वीर्यं किं गर्वित च तथा रिपो ।
न चाहं देवराजो हि धनदो वा यमोऽपि वा ।
मानुषं मा विजानीहि रामं दशरथात्मजम् ।
समुद्रास्त्वया पूर्वं दृष्टो वै दैवतैः सह ।
साम्प्रतं हि मया मत्स्यमानुषे सह रक्षसाम् । [ 10 ]
अन्यथापि यदुक्तोऽसि राघवेण महात्मना ।
तत्सर्वं कथयिष्यामि तव राजन्निशामय ।
जातो हि महावंशे त्वं राक्षसानां महात्मनाम् ।
कुत्सां च बुद्धिं कुर्वाणो लज्जसे किं न राक्षस ।
देवानां दानवानां च यक्षाणां चैव निश्चयः । [ 15 ]
यद्यत्पापकृतं पापं तस्य द्रक्ष्यसि वै फलम् ।
दर्शयिष्यामि ते मार्गं च कृतान्तविरोधयोः ।
तृणं गृहीत्वा दशनैः प्रणाम चेत्स ते कृत्या ।

71 [a]) Ś D13 ध्रुवैव, Ñ1 B अथैव; Ñ2 अथैवं Ñ3 शब्द (for वाक्यं) T3 इत्येवं पुरुषव्याघ्रे —[b]) G1.3 ब्रुवाणे वालिनन्दने —[c]) D1 अमर्षवशम् —For 71[cd], Ñ B subst while D1 ins after 71[cd]

648* क्रोधेन परमाविष्टो रावणो लोकरावणः ।
[ Ñ2 B1.3 D1 महताविष्टो (for परमा°) ]

72 [a]) Ś V1 D0–3.4.6.12 ततो रोषाभि(Ś D6 °विष्ट V2 °ष्ट)ताम्राक्ष; Ñ V1.3 B D5.13 अति(V1.3 D5.13 ततो)-रोषाग्नि(Ñ °भि D4 °विष्ट)ताम्राक्ष; D7–11 ततः स रोषता°क्षः —[b]) D6.8 G2 शशास (for शशास) V1 D7.12 तथा (for तदा) —[c]) Ś V D0–4.6.11 T2.3 G M1.2.3 इति; D13 अति (for एष) —[d]) Ñ B वध्यताम् (for वध्यताम्) B2 एष D3 चाब्रवीत् (for चासकृत्) T3 वध्यतां वध्यतामिति

73 [b]) D1 T3 वर्चस; D1 M1.2 वचस (for तेजस) Ñ B2.3 D7.10.11 दीप्ताग्निविष तेजस (D7.10.11 °ता) —For 73[cd], Ś V D0–4.6.11.12 subst

649* स शैलशृङ्गप्रख्यामवनिद्रुममिवाद्वयम् ।
[ D6 ते (for स) D1 °प्रख्य°, Ś D2.4.11 °प्रतिम°, D1 सदृश (for °प्रख्य°) V2 वनिद्रुमम्; D8 °प्रख्यमिव; D4 अवनिन्दम्; D3 °प्रख्यं दृढम्; D1 अवनिन्दम्; D12 अथ स्वनम्; D13 अति दुर्दिनम् (sic) (for अवनिद्रुमम्) D6 दृढम् ]

—[c]) Ś V D0–4.6.12 आस्फालयत्, D13 आस्फालयन्, V3.4 जगृहुस्त (for जगृहुस्त) Ñ1 B D1.4.13 तदा V1 घोर, G1 M3 वीराश्च (for घोराश्च) —[d]) V3 घोराश्च (for चत्वारो) M3 सत्वरतो निशाचराः

74 [a]) D3 उग्रम् (for स्वयम्) B1.3 D5.7.8.11 T1.3 G1 M1–3 G2 आत्मवान्; G3 as in text (for आत्मना) —[c]) Ś D4.8.12 निदर्शयन्, V1.2 सन्दर्शयन्; V3 D6.8 विदर्शयन्, D1 व्यदर्शयत् (for दर्शयितुं) G1 M3 घोरं (for वीरो) —[d]) Ś V D0–4.6.11.12 निशाचर; B1–3 °चरे, B4 °गणं (for गणे) V1.2 तत; Ñ यातुधाने बले तदा

75 V3 om 75–76[ab] —[a]) Ś1 B2 D1.4.6–11 द्रुयासक्तान्, B1 °बल सक्तान् (for द्वये सक्तान्) —[b]) V3 अपि तक्षुसनिभ (sic); D6 नागान्पतगानिव, D7 आदाय हरिपुंगवः —[c]) D6 प्रासादं शैलसंकाशान्; D4 प्रासादाच्छैल संकाशाद् —[d]) Ñ B तदाङ्गद (by transp) —After 75 D1 ins.

650* स तान्निर्धूतवानाशु गुरुहस्तान् वानरः ।

76 V3 om 76[ab] (cf v l 75) —[ab]) Ñ B अंत रिक्षाद्, V1.3 त निपेतुर्; D6.8 G1.2 M1.2.3 तदरिक्षे D6 दिव G1.2 M1 तु (for वि) D7–11 तस्योरुतलवेगेन निधूतास्तत्र राक्षसाः —[c]) V1.2 निहीनास्ते (for निपतिता) —[d]) Ś V D0.1.4.10.12 तदा D13 सर्वे) निपेतुर्धरणीतले (Ś D4.12 °तलम्) Ñ B नि(Ñ2 नि)सृताः सर्वराक्षसाः

77 [b]) M1 (उ,)न्नितं (for (उ,)न्नतम्) —For 77[cd], Ś Ñ V B D0–4.6.12.13 subst

651* प्रासादशिखरं श्रीमानङ्गदस्तु पदाहनत् ।
[ Ś D0.4.6.7.12.13 श्रीमद् (for श्रीमान्) Ś D4.12.13 अंगदेन पदा(D13 °दा)द(D6 °द्र)त् V1 अंगदेनादहत्, D1.4 तद् दनार्दत् (for the post half) ]

—After 77[ab], D7.9.10.11 S ins

652* दृष्ट्वा राक्षसेन्द्रस्य वालिपुत्र प्रतापवान् ।
[ D8.9 T3 M3 तत्र D10.11 चैव वचनं G1.2 दृष्टे (for दृष्ट्वा) D8 रावणेन्द्रस्य (for राक्षसे°) G2 C1 °वत्स तर्जस्थाने संस्थितः ]

पुनश्चोक्तोऽस्मि तेनात्र गच्छ गच्छेति मा चिरम् ।
भ्रष्ट निर्लज्ज नीचेति ध्रुवं निन्ये यमक्षयम् ।
शत्रुणा प्रहितो नूनं शत्रुपक्षप्रशंसकः ।
रामस्यानुगतं भक्तं न त्वां द्रष्टुमिहोत्सहे ।
एवमुक्तोऽस्मि परुषं रावणेन शुभानने । [75]
राममेवानुगच्छामि त्वां तु द्रष्टुमिहागतः ।
यदि मे दुरनुक्रान्तं यदि वा दुरनुष्ठितम् ।
यदि दुश्चरितं मन्ये ततो गृह्य प्रशाधि माम् ।
एवमुक्ता तदा तेन माता तस्य महात्मनः ।
नाशकद्धारितुं सुभ्रूर्मूर्छमपीव व्यवस्थिता । [80]
ततः सञ्ज्ञामुपागम्य मुहूर्तादिव भामिनी ।
उवाच रुदती वाक्यं बिभीषणमिदं तदा ।
एवमेतन्महाबाहो यथा वदसि पुत्रक ।
विद्धि नूनं विनाशं च सर्वेषां समुपस्थितम् ।
स्मारितास्मीह वचनं पुत्र तद्विपुलं त्वया । [85]
ब्रह्मणश्च महाबाहो तच्छृणुष्व समाहितः ।
दशग्रीवप्रभृतिषु जातेषु कुलनन्दन ।
निर्जितेषु च देवेषु सशक्रेषु महात्मसु ।
चिन्तयन्ती कुलस्याहं पुत्र वंशकरं शुभम् ।
तपस्विनस्तव पितुर्गताश्रमपदं ह्यहम् । [90]
स्थितास्मि पुरतो वत्स तव पित्रे महात्मने ।
वक्तुकामा विशालाक्ष पितरं ते तपस्विनम् ।
ततो मां स्थितां दृष्ट्वा पुरस्तादृषिसत्तमः ।
उवाच मधुरं वाक्यं हर्षगद्गदया गिरा ।
किमागमनकृत्यं ते ब्रूहि सत्येन शोभने । [95]
एवमुक्तास्मि मुनिना पुत्र बुद्धिमतां वर ।
ततोऽहं वक्तुमारब्धा प्राञ्जलिः प्रणिपत्य तम् ।
आगतास्मि महाभाग संशयच्छेदनाय वै ।
तव वाक्येन ये जाताः पुत्रा मम महाव्रत ।
सर्वं राज्यं विपुलं प्राप्ता लब्ध्वा पैतामहं पदम् । [100]
किंचिच्चिन्तास्ति संभूता दृष्ट्वा पुत्रं महाबलम् ।
अवध्यं वरदानेन सर्वैरपि दिवौकसैः ।
यक्षगन्धर्वनागैश्च पिशाचैरपि रक्षसैः ।
एवंविधेषु पुत्रेषु जातेषु तव सुव्रत ।
को नु वंशकरो ब्रह्मंस्तव पुत्रो भविष्यति । [105]
कथं मां स महाबुद्धिः काले धर्मभृतां वरः ।
दुराचारव्रतयुतो राज्ये स्थास्यति रावण ।
कनिष्ठश्चापि धर्मात्मा पुत्रो वंशधरस्तव ।
राज्ये स्थास्यति धर्मेण यावद्भूमिर्धरिष्यति ।
पुनरुक्तः स तु मुनिर्मया पुत्र प्रणम्य वै । [110]
उवाच वचनं धीमान्सर्वज्ञो भगवानृषिः ।
शृणु कैकसि यद्वृत्तं ब्रह्मणः सदने शुभे ।
देवानां सन्निधौ भद्रे ऋषीणां च समागमे ।
यक्षकिंपुरुषाणां च पितॄणां वामलोचने ।
गन्धर्वाणां सनागानां पिशाचानां तथैव च । [115]
श्रेष्ठानां देवयोनीनां सन्निधौ यन्मया श्रुतम् ।

तेन (for समागमे). —D5 om. from the post. half up to the prior half of l. 71. —(l. 71) D3 भत्स्यानाह; L (ed.) [अ]ह तेन (for तेनात्र). L (ed.) तत्र (for first गच्छ). —D1 om. l. 72. —(l. 72) D5 धस्त (for भ्रष्ट). D1 न त्वां; L (ed.) न त्वा (for ध्रुव). —(l. 73) D4 शत्रुणा हि (hypm.). —(l. 74) Ś3 D13 राम चानुगत रक्त, D5 रामानुरागरक्त च; D4 रामे सानुरागसक्त (for the prior half). —(l. 75) D5 पारुष्य (for परुष). —(l. 76) D13 [उ]त्सहे (for [आ]गत). —(l. 77) D1.4 वा दुरति- (for मे दुरनु-) and दुरपि- (for दुरनु-). —(l. 78) D1.4 मत्वे; D13 मेच (for मन्ये). —(l. 79) Ś3 D4 एवमुक्त्वा. —(l. 80) D4 स्थिता तदा (for व्यवस्थिता). D3 मृत्युनेवास्थिता तदा (for the post. half). —(l. 81) D3 चैव (for इव). —(l. 82) D3 सान्त्व (for रुदती). —(l. 84) D3 विद्धि नू (D4 क्षयो नू)न विनाशाय (for the prior half). D1.4 स्युपस्थित°. —(l. 85) D1.1 चास्मि (for [अ]स्मीह). D1 ते (for तद्). Ś1 D4.13 यशः (for त्वया). D1 पितुस्ते विपुलोजस° (for the post. half). —(l. 86) D3 महर्षेः सु°, D4 महात्मसु. —(l. 88) D4 om. (hapl.) च देवेषु. D1.4 महाभवे (for महात्मसु). —(l. 89) D1.4 पुत्र. D4 वशधर; L (ed.) वंशकरं. D1.4 सुत (for शुभम्). —(l. 90) Ś1 तपस्विन च पुत्र, Ś3 D13 तपस्विने च पित्रे ते (for the prior half). D1 गत्वा (for गता). D3 तथा, D13 गृह (for ह्यहम्). —(l. 91) D4 स्थितस्तव महात्मने (for the post. half). —After l. 92, D1.4 ins.:

7* सर्वदोषविनिर्मुक्तं परमेष्ठिसमं मुनेः ।
ध्यानयोगसमायुक्तमाश्रमस्थं महामुनिम् ।

—(l. 93) D3 स्थितो (for स्थितां). —(l. 96) D1 ऋषिणा (with hiatus) (for मुनिना). D1.4 बुद्धिमतां वरा (for °मतां वर). —(l. 100) D4.13 स्व (for सर्व). D1 प्राप्त. D4 लब्ध (for लब्ध्वा). D3 लब्ध तस्य महाफल (for the post. half). —(l. 101) D4 पुत्र दृष्ट्वा (by transp.). D3 विभुता चास्ति सम्भूतान्दृष्ट्वा पुत्रान्महाबलान्. —(l. 102) D3 आख्यान् (for अवध्यं). —(l. 105) D3 नो (for नु). L (ed.) वंशधरो. D4 वद (for तव). —After l. 105, D4 ins.:

8* एवमुक्तो महर्षिर्मां समोवाचेति रावण ।

—(l. 106) D3 किं नु वक्ष्ये महाबुद्धे काले शस्त्रभृतां वरः; D4 किंतत च महाबाहो काल धर्मभृतां वर. —(l. 108) D3 कतरस्तु; D4 कतमस्तु (for कनिष्ठस्तु). D1.4 वंशकरस्तव (for °धरस्तव). —(l. 110) D4 एवम् and च (for पुनर् and तु respy.). D3 एवमुक्तस्तु मतिमान् (for the prior half). D1 हि (for वै). —(l. 111) D1.4 बुद्धिमान्वर (D4 °नृषिः) (for भगवानृषि°). —(l. 114) After पितॄणां, D13 erroneously repeats from च समागमे in l. 113 up to पितॄणां in l. 114. D3 पितॄणां च विशालाक्षि यक्षकिंपुरुषेष्वपि, D4 पितॄणां चापि यक्षाणां किन्नराणां च शोभने. —Ś1 om. l. 115. —(l. 115) Ś3 सुनागानां (for स°). —(l. 116) D1.1 प्रथमानां (for श्रेष्ठानां).

त्वत्तोऽहं संप्रवक्ष्यामि परमेष्ठिन्वचस्तदा ।
रावणेन जितो भद्रे शक्रः सुरगणैः सह ।
तन्मे हृतं महाराज्यं हस्तादिव्यमिवाहितम् ।
रावणेन च निर्जित्य बद्ध्वा नीतोऽस्मि स्वां पुरीम् । [120]
विमुक्तस्तव वाक्येन निर्लज्जः पुनरागतः ।
त्रिदशेषु महाबाहो राज्यकामो ह्यहं तव ।
एतत्ते कथितं सर्वं मम दुःखं तव प्रभो ।
त्वं प्रमाणं महाबुद्धे यत्तच्छ्रेयस्तदुच्यताम् ।
एवमुक्तस्तदा ब्रह्मा कौशिकेन महात्मना । [125]
उवाच वचनं सूक्ष्मं सर्वलोकहितं तदा ।
काले सुरगुरुर्ब्रह्मा कौशिकाख्याय शृण्वते ।
शृणु कौशिक भद्रं ते यथा वक्ष्यामि सुव्रत ।
सर्वं श्रुतं मया शक्र तव संग्रामकारणम् ।
निर्जितश्चासि संग्रामे तच्च मे विदितं तव । [130]
प्राप्तोऽरिर्दुष्टदुर्मेधा रावणो लोकरावणः ।
कृतान्तपाशासिधरश्चण्डस्तीक्ष्णतरो ध्रुवम् ।
वरदानकृतोत्सिक्तो दुर्धर्षो रावणो मम ।
तं गच्छत मया सार्धं विष्णुममितौजसम् ।
शङ्खचक्रगदापाणिं वरचन्दनभूषितम् । [135]
वरचापधरं देवं वीरं श्रीवत्सलाञ्छनम् ।
कौस्तुभोद्भासिततनुं श्रिया ह्यमनुत्तमम् ।
अतसीपुष्पसंकाशं पीतवाससमच्युतम् ।
गरुत्मत्स्कन्धमासीनं पुण्डरीकनिभेक्षणम् ।
देवदेवं महाभागं विष्णुं ह्यभयमव्ययम् । [140]
योगसांख्योपनिषदैर्वेदैश्च समभिष्टुतम् ।
पुरुषं परमं विष्णुमनन्तं सर्वतोमुखम् ।
धर्मसेतुप्रवक्तारं सुराणां च हिते रतम् ।
तं गच्छाम वयं देवं सर्वदेवनमस्कृतम् ।
यद्विधास्यति नो नाथस्तत्कार्यमविशङ्कया । [145]
एवमुक्ताः सुराः सर्वे वत्तस्युरमितौजसः ।
विमानैः सूर्यसंकाशैर्हंसबर्हिणवाहिभिः ।
ब्रह्माणमग्रतः कृत्वा गतास्ते क्षीरसागरम् ।
आस्थिता एकदेशं तु समे भूमितले तदा ।
तपस्युग्रे महात्मानं योजयन्तस्तदा सुराः । [150]
आत्मानं ते महात्मानं देवदेवं दिदृक्षवः ।
गतेऽनेकशते काले वागुवाचाशरीरिणी ।
दुन्दुभिस्वननिर्घोषा हर्षयन्ती दिवौकसः ।
उत्तिष्ठ भगवन्विष्णो कुरु कार्यं महाबल ।

—(l. 117) D यथा । (for तदा). D परम च वचस्तथा (for the post. half). —After l. 118, D ins.:

9* व्रजाम ब्रह्मसदनं शरणं शरणैषिणः ।
निपतत्पादयोस्तस्य देवदेवस्य धीमतः ।
निर्जितस्तव पौत्रेण प्राण भद्र प्रदर्शय ।
मेघदेवेषु बद्धेषु सर्वे सुरगणैः सह ।
स्वयास्मि स्थापितो राज्ये देवानां प्रपितामह ॥ [5]

whereas D ins.:

10* आगत्य ब्रह्मसदनं वाक्ये प्रणतो यतः ।
भगवस्तत्प्रसादेन वरभाक् चतुरानन ।

—After l. 118, L (ed.) reads a damaged line. —(l. 119) D रम्यम् (for दिव्यम्). D कराद्विष (for इवा-हितम्). —(l. 120) D L (ed.) वि(L [ed.] सु)निर्जित्य. D निजां (for ऽस्मि स्वां). —(l. 121) D मुक्तोऽस्मि (for विमुक्तस्त). —(l. 122) D (ऽ)स्म्यह (for ह्यह). D निभो, L (ed.) तदा. —(l. 123) D मम दुःखतर विभो (for the post. half). —(l. 124) D प्रमाण हे महाबुद्धे (for the prior half). D न; D तु (for तच्). —(l. 125) D ततो (for तदा). —Ś om. (hapl.) from the post. half up to the prior half of l. 127. Ś D वासवेन (for कौशिकेन). —(l. 126) D श्लक्ष्ण (for सूक्ष्म). D भूत- (for -लोक-). —D om. l. 127. —(l. 127) D धीरः (for ब्रह्मा). D कौशिकस्योपशृण्वत (for the post. half). —(l. 128) D तदा (for यथा). —(l. 129) Ś संग्रामकारक. —(l. 130) Ś D (अ)पि (for (अ)सि). D तस्य (for तच्च). L (ed.) तत (for तव). —(l. 131) D प्राप्तो हत. सुदुर्मेधा, D प्राप्तदिष्टो दशग्रीवो (for the prior half). —(l. 132) D कालपाशधरो (D °गत)श्चैव मृत्योरिद्-दरे गत. —After l. 132, D ins.:

11* कामितन्यर्थवक्त्रांश्च वासवे सुरदानवान् ।

—(l. 133) D कुरुष्वन्तु ममात्थ (for the post. half). —(l. 134) D आगच्छ मे (D तद्गच्छामो) महाबाहो (for the prior half). —(l. 135) D वरद सुरभूषण (for the post. half). —(l. 136) D वीर (for देव). Ś सुर (for वीर) D श्रीवत्सकृतभूषण, D देव श्रीवत्सलक्षण (for the post. half). —(l. 137) D श्रिया नित्यम् (for श्रिया क्षयम्). —After l. 138, Ś erroneously repeats l. 136. —(l. 139) D गरुड-; D गारुड (for गरुत्मत्-). —(l. 140) D परमम्; D प्रजरम्; L (ed.) निर्जरम् (for ह्यभयम्). —(l. 141) Ś D योगि. Ś -सांख्य- (for -सांख्य-). D -(उ)पनिषदात्. Ś D त्रिदशै (for वेदैश्च). —(l. 142) D विभुम् (for विष्णुम्). D सर्वपौरुष (for सर्वतोमुखम्). —(l. 143) D -प्रवक्तारं (for -प्रवक्तारं). —(l. 144) D तद्गच्छाम (D त गच्छामो) हरिं देव (for the prior half). D देव- (for सर्व-). —(l. 147) D वाहिनि (for -वाहिभिः). —(l. 149) D तत्र स्थित्वा तु ते सर्वे (for the prior half). —(l. 150) D महात्मानो (for महात्मान). —D om. (hapl.) from the post. half up to the prior half of l. 151. D योजयेरन्; D जजपेरन् (for योजयन्तस्). —(l. 152) D ततो दश- (for गतेऽनेक-). —(l. 153) D -स्वर- (for -स्वन). —After l. 153, D ins.:

12* सुराणां किमनुप्रेय ब्रह्म ब्रूहि महाबल ।
एवत्तद्वचनं श्रुत्वा ब्रह्मा वेदविदां वरः ।
उवाच वचनं धीमान्यद्भि सो दिवौकसाम् ।

—(l. 154) D महाबल. —(l. 156) D कुबेरे (for

देवानां भयभीतानामभयं दातुमर्हसि । [155]
रावणं सगणं देव त्वं निषूदय दुर्मतिम् ।
मानुषं रूपमास्थाय जहि शत्रुं दुरासदम् ।
एवमस्त्विति धर्मात्मा जातो रघुषु वीर्यवान् ।
विभक्तात्मा चतुर्धा च देवश्चक्रगदाधर ।
सर्वे ते त्रिदशा जाता वानरीषु महाबला । [160]
ऋक्षीषु च महात्मानो देवपुत्रा मदोत्कटा ।
स एष नृपशार्दूलो जातो रावणनिग्रहे ।
कुलस्य च विनाशाय अस्माकं वत्स साम्प्रतम् ।
तव पित्रा च विज्ञप्तो वत्सस्थित्यै पितामह ।
अस्माकं संततिं कस्मादविच्छिन्ना भविष्यति । [165]
तत्र वराधर संपन्नभविष्यति विभीषण ।
नारायणात्प्राप्तराज्यो यावच्चन्द्रार्कभूमय ।
श्रीरामवचनाच्चैव चिरजीवी भविष्यति ।
त्वं चैव ब्रह्मणा प्रोक्तो राजा लङ्केश्वर प्रभु ।
त्वं गच्छ रामं धर्मज्ञं लोकरामं महाबलम् । [170]
स ते प्राणांस्तथा राज्यं दास्यते रघुनन्दन ।
यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ।
तावल्लङ्केश्वरस्त्वं हि एतदेव मया श्रुतम् ।
तव पित्रा मुखोद्गीर्णं त्वत्स्नेहाद्गदितं मया ।
तद्गच्छ पुत्र भद्रं ते त्रिदशारिसूदन । [175]
करोतु स्वस्ति ते ब्रह्मा त्रिनेत्रश्च महेश्वर ।
शङ्खचक्रगदापाणि पुराण पुरुषोत्तम ।
अहं च स्वस्तिनिरता तव नित्यं महाबल ।
एवमुक्तस्तु धर्मात्मा मातरं पृच्छ्य च तां तदा ।
अभिवाद्य च धर्मेण उत्पपात स राक्षस । [180]

## 7

After 6 11 1[*], Ñ1 V1.2 (l 1-4 only) B D1 ins

क्रोधसंरक्तनयनं ससंध्यमिव तोयदम् ।
भुजंगकुटिलां रोषाद्भ्रुकुटीं भृशदारुणाम् ।
कृत्वासीनं प्रपश्यन्तं प्रासादस्थममर्षणम् ।
अभिवाद्य ततो भूय क्रोधपर्याकुलेक्षण ।
चतुर्भि सचिवै सार्धं निश्चक्राम विभीषण । [5]
स मातरं पुनर्दृष्ट्वा सर्वमेव निवेद्य तत् ।
जगामाकाशमाविश्य कैलासं पर्वतोत्तमम् ।
यत्र वैश्रवणो राजा तिष्ठत्यमितविक्रम ।
गुह्यकैर्बहुभि सार्धं यक्षैश्चैव महाबलै ।
अथाजगाम धर्मात्मा लोकानामीश्वर प्रभु । [10]
तत सभायां देवस्य राज्ञो वैश्रवणस्य स ।
धनाध्यक्षसभां देव प्राप्तो हि वृषभध्वज ।
उमासहायो देवेशो गणैश्च बहुभिर्वृत ।
अवतीर्य वृषात्तूर्णं सहित शूलधृग्विभु ।
गिरिशस्तु महातेजा प्रविष्टस्तु सभां हर । [15]
उमया सहाययुक्तश्च तथा वैश्रवण स्वयम् ।
अन्योन्यं तौ समालिङ्ग्य उपविष्टावुभावपि ।
सभायां तत्र तौ देवौ ते च देवा यथाक्रमम् ।
उपविष्टा गणाश्चैव यक्षाश्च सह गुह्यकै ।
अक्षद्यूतं ततस्ताभ्यां प्रवृत्तं समनन्तरम् । [20]
एतस्मिन्नन्तरे तत्र राक्षसेन्द्रं विभीषणम् ।

---

दुर्मतिम्) —(l 157) D3 देहम् (for रूपम्) —(l 159) D3 चतुर्विधं विभज्यात्मा D5 चतुर्धा तु विभज्यात्मान (hypm) (for the prior half) D1 शङ्ख (for देवश्) D3 शङ्ख (for चक्र) —(l 160) D1 [ऽ]पि (for ते) D3 सर्वेषु देवता जाता (for the prior half) Ś1 D1 वानरेषु —(l 161) D3 ऋक्षेषु (for ऋक्षीषु) and बल (for मद) —(l 162) D3 रघुशार्दूलो —(l 163) Note hiatus between the two halves D3 विनाशोयम् (for विनाशाय) —D3.4 om l 164-168 —(l 165) Ś1 एवं छिन्ना (for अविच्छिन्ना) —(l 168) L (ed) चिरजीवी —(l 169) L (ed) ब्रह्मणा (for ब्रह्मणा) D3.4 यस्य वै (D4 त्वं चापि) ब्रह्मणाप्युक्तो (for the prior half) —(l 170) D3.4 तद् (for त्वं) D3 सर्वज्ञं D4 धर्मज्ञं —(l 173) D3 भवाँल्लङ्केश्वरश्चास्ये (for the prior half) —(l 174) Ś1 पितृ (for पित्रा) L (ed) न (for त्वद्) D4 हृदि मे स्थितं (for गदितं मया) —(l 175) D3 जयाय च (for [अ]रिसूदन) —L (ed) om l 176-177 —(l 176) D3.4 स्वस्ति कुर्वन्तु (for करोतु स्वस्ति) D3 [ऽ]थ (for च) —(l 177) D3.4 पुराणं (for पुराण) D3 तथा देवो जनार्दन (for the post half) —After l 177 D3.4 ins

13* पिता च ते महाबाहो सततं पातु सुव्रत ।

—(l 178) D4 तु (for च) —After l 178, D3 ins colophon [युद्धकाण्डे कैलासीयात्रायाम् ॥ १०० ] —(l 179) D4 स (for तु) D3 नत्वासौ (for तु धर्मात्मा) D3 तामापृच्छ्य च वीर्यवान् D4 अनामापृच्छ्य वीर्यवान् (for the post half) —(l 180) D4 स (for च) D3 धर्मात्मा ऊर्ध्वमुत्पत्य (for धर्मेण उत्पपात स) L (ed) राक्षसे —After l 180 D3 ins

14* चतुर्भि सचिवै सार्धं अनन्या स विपश्चित ।

7

For l 1-6, cf l 1-6 of App I (No 6) —(l 1) B1.2 संध्यायाम् (for ससंध्यम्) —(l 2) V3 D5 भ्रुकुटीं, B3 भ्रुकुटिं —(l 3) Ñ2 प्रकामं V3 निरीक्षत (for प्रपश्यन्त) —(l 4) B2.3 अभिवादयते (for °वाद्य ततो) Ñ2 D5 [ई]क्षण (for [ई]क्षण) —(l 5) B1.4 विभीषण (here and below) —(l 7) Ñ2 B1-3 कैलाश —(l 9) V1 B1 गन्धर्वैः (for गुह्यकैर्) —(l 10) V1 B1 स तु प्रधान्ये B2.3 अथामहार्थौ (for अथाजगाम) —(l 11) Ñ2 B1 D5 च (for स) —(l 12) B4 सखो (for -सभां) V1 प्राप्तो देवो (by transp) Ñ2 B4 D5 संप्राप्तो (for प्राप्तो हि) —(l 13) Ñ2 B4 D5 गौर्या सह महादेवो (for the prior half) Ñ2 V1 B1 D5 तु (for च) —(l 14) B2.3 महित (for सहित) Ñ2 B4 D5 शूलभृद्, —(l 15) Ñ2 B2 D5 च (for तु) —(l 17) Note hiatus between the two halves B3 ते (for तौ) —(l 18) B3 यत्र B3 ते (for तौ) —(l 20) B1.2 तस्मात् (for ताभ्यां) —(l 24) B4 स कुल-

दृष्ट्वा पौलस्त्यमायान्त शिव प्राह धनेश्वरम्।
अथ विभीषण प्राप्त शरण तव पार्थिव।
मन्युनाभिद्रुतो धीरो राक्षसेन्द्रविमानित । 
सिंहासनस्थ भङ्गेन सिंहासनसमुत्सुक । [25]
परुषाणा च वाक्याना तस्मिन्क्रुध्वा रणेन च।
इह प्राप्तस्तव क्षेप मस्तु कृतमतिरिहाद्य वै।
सर्वथा ह्येष दुर्धर्ष क्षिप्रमद्यैव वीर्यवान्।
रामाभ्यास महावीर्यो गच्छता तव शासनात्।
ततो यास्य नरव्याघ्र स राम शत्रुतापन । [30]
अभिषेक्ष्यति राज्येन राक्षसाना विभीषणम्।
सत्ये चैव तदा राम सुग्रीवश्च तथा कपि ।
वरयिष्यति दुर्धर्षो रामो वीर विभीषणम्।
ततस्तु सगता ह्येते दीप्तास्त्रय इवाग्नय ।
लोककार्यं करिष्यन्ति शिव हि त्रिबुधै सह। [35]
सन्निवृतो विप्रगणैरभिष्टुता
वहन्ति यत्र सुरभूतये शुभम्।
सुसस्कृत हव्यवहा क्रतौ हुत
तथा त्रयो रामविभीषणादय ।
कपिप्रवीरश्च सुमनतो बली [40]
विभीषणेनानुगतो महात्मा।
महद्धि लोके ह्यसुरामरे यथा
तथा ह्यय कर्म करिष्यतेऽनघ।
एव सजल्पतस्तत्र समासन्न विभीषण ।
जानुभ्या पतितो मत्वा शिरसा स्तवनी गत । [45]
त प्राह शकर श्रीमान्स च वैश्रवण प्रभु ।
उत्तिष्ठोत्तिष्ठ भद्र ते मा मन्यु कुरु राक्षस।

श्रिय प्राप्नुहि दुर्धर्ष दशग्रीवादनन्तरम्।
गच्छ सौम्य गुणारामो रामो यत्र महाभुज ।
सुग्रीवो वानरश्चैव लक्ष्मणश्च प्रतापवान्। [50]
इतो गत महातेजा राम शस्त्रभृता वर ।
अभिषेक्ष्यति राज्येन लङ्काया शत्रुघातिनम्।
रावण च रणे राम नगण पुरुषर्षभ ।
निहनिष्यति धर्मात्मा प्रसह्य रणमूर्धनि।
स निहत्य महाबाहु सीतामादाय सत्वर। [55]
स्वपुरीं यास्यते धीमान्सह सौमित्रिणा प्रभु ।
लङ्कायामीश्वर चैव भवन्त विबुधोपमम्।
स्थापयिष्यति धर्मात्मा नचिराय महायशा ।
ततो वैश्रवणो राजा पौलस्त्यकुलनन्दनम्।
विभीषण राक्षसेन्द्र तत्र प्राह महाद्युति । [60]
त्व राजा सर्वथा वीर लङ्काया प्रथितस्तदा।
भविष्यस्यभिरादेव दत्तमेतत्पुरातनम्।
प्रथित सर्वथा वत्स भविष्यसि युगे युगे।
अनागत त्वया वीर धर्मज्ञेन महात्मना।
स त्व धर्मभृता श्रेष्ठ क्षिप्रमद्यैव राघवम्। [65]
भवाय सर्वभूतानामभवाय च रक्षसाम्।
उपगच्छ नरव्याघ्रमात्मनश्च विभूतये।
त्व रामसहित क्षिप्र कुरु कार्यं दिवौकसाम्।
ऋषीणा च महाभाग ये चान्ये धर्ममाश्रिता ।
अधर्मशील निरपत्रप यथा [70]
निरङ्कुश वैरमदानुगामिनम्।
तपश्चराणां मृदुसौम्यशीलिनां
सदा विरुद्ध जहि रावण तथा।

(for मन्युना) —(l 25) V1 B1 रणेन च, B2.3 न्वरेण च (for समुत्सुक) —B1 om (hapl ) l 26 —(l 26) V2 तु (for first च) B3 तदा (for तस्मिन्) —(l 27) B1 [अ]येव (for अप) and कृत्वा मति (for कृतमतिस्) B3 त्वया —(l 28) B2 क्षत्र (for क्षेप) N2 D5 दुर्वार्य (for दुर्धर्ष ) —(l 30) V2 तत्र N2 B4 यावत् (for यास्य) Ñ2 शत्रुतापन —(l 31) B2 अभिषेक्ष्यामि B1 धर्मात्मा D5 राजान (for राज्येन) —(l 32) Ñ1 B4 मता , V1 D3 तदा (for तथा) B1 सुग्रीवाय यथा कपि (for the post half) —(l 33) B2.3 रणे (for रामो) —(l 36) Ñ2 V1 B1 D5 समेपिता (for सन्निवृतो) B3 विष्णु (for विप्र) —(l 37) B4 यत्ते (for यत्र) Ñ2 D5 यत्ते पुरहूतये —(l 38) Ñ2 B4 D5 हुताश (for हुत) V1 B1 सुसस्कृता हव्यवह (V1 °भुज )क्रतौ हुतस्य —(l 39) B4 यथा (for तथा) —(l 40) D5 समवतो (for सुसमतो) —(l 41) D5 महात्मना (for महात्मा) —(l 42) Ñ2 B4 सुरसाध्वरे यथा V2 त्रिपथाध्वरे यथा B1 च सत्ता महाध्वरे, D5 [5]भ्युदयेध्वरे यथा (for ह्यसुरामरे यथा) —(l 43) B2 om (hapl ?) तथा N2 D5 हि तत्, V2 तु तत B4 हित (for ह्यय) B1 यथा तथा (for तथा ह्यय) —(l 44) B1 यदास्य B3 एतस्य (for एव स ) B3 एतस्सजल्प तस्तत्र (for the prior half) —(l 45) B3-4 पतितो (for पतितो) V2 स्तवर्ने B2.4 धरणी (for स्तवनी) —(l 46) B4 रे (for च) —(l 48) N2 D5 दुर्धर्षा B4 धर्मज्ञ (for दुर्धर्ष) —(l 49) B4 गुणाराम (for गुणारामो) V2 यत्र रामो (by transp ) B2 महानुज (for °भुज ) —(l 51) N2 गतो B1 गते (for गत ). B4 महात्मा (for °तेजा) —(l 53) B1 पुरुषर्षभ —(l 56) B1.2 स, D5 स्तो (for स ) B4 यास्यति श्रीमान् (for यास्यते धीमान्) N2 D5 विभु (for प्रभु ) —(l 57) Ñ2 चैव, B2.3 रामो (for चैव) B4 विविधोपम —(l 58) B4 नचिरात्स —(l 59) B4 पुलस्त्य N2 B4 D5 नन्दन —(l 60) B2.3 महायशा (for °द्युति ) —(l 61) D5 om (hapl ) from the post half up to the prior half of l 64 N2 प्राप्तितस् (for प्रथितस्) N2 B2.3 तथा —(l 62) B3 पुरातने —G (ed ) om l 63-64 B1.2 om l 63 —(l 63) V1 राम B2 वीर (for वत्स) —(l 64) V2 अनागतस्त B1 यत्र मे तत्, B2.3 समागत (for अनागत) —(l 65) B2 श्रेष्ठ , B3 श्रेष्ठ (for श्रेष्ठ) —For l 65 66 V1 subst

1* पालिन विरतान्ताय लङ्काराज्य भविष्यति ।

—(l 68) Ñ2 B4 D5 तत्र B3 जीव (for क्षिप्र) —(l 71) B4 महागज N2 B4 D5 स्वैर (for वैर ) —(l 72) V1 B1.4 D5 ज्ञानिना (for शीलिनां) —(l 73) B4 महाविरुद्ध (for सदा विरुद्ध) —(l 74) B1 लोकनिपातने,

महाध्वरे सोमविलोपनं यथा
  तथा च देवादिविघातने रतम्। [75]
दशाननं पापरतं यथा स्थितं
  प्रियेऽनुजे देवगणे च नित्यम्।
तथा विमाने तु यथा स्थितं ध्रुवं
  न सत्पथं दूरत एव वर्जयेत्।
दशाननं वर्जयतस्तवानघ [80]
  यशश्च ते नित्यसुखानुयायिनः।
श्रुत्वैतद्वचनं धीमानग्रजस्य गुणान्वितम्।
अधोमुखो ध्यानपरो ह्यतिष्ठत्स विभीषणः।
तं ध्यायमानं भगवानुवाच प्रभुरव्ययः।
उत्तिष्ठोत्तिष्ठ राजेन्द्र सुखमाप्नुहि शाश्वतम्। [85]
सुकृतस्य महाप्राज्ञ तपसः फलमीदृशम्।
प्रत्यक्षं दृश्यते धीर सर्वमेतद्विभीषण।
तस्मादुत्तिष्ठ गच्छ त्वं पुराणं प्रभुमव्ययम्।
आधारं सर्वभूतानां शाश्वतं निरवग्रहम्।
स हि धर्मनिधानं च गतिर्गतिमतां वरः। [90]
कृत्स्नस्य जगतो मूलं तस्माद्गच्छस्व राघवम्।
श्रुत्वैतद्वचनं तत्र नीलकण्ठेन भाषितम्।
उदतिष्ठन्महाबाहुस्तैरेव सचिवैः सह।
नमस्कृत्वा शिवं देवं तथा वैश्रवणं प्रभुम्।
रामाभ्यासं ययौ क्षिप्रं धर्मात्मा स विभीषणः। [95]
जगामाकाशमाविश्य रामो यत्र महाबलः।

## 8

After 6.12.3, D5-7.10.11 S ins.:

सुग्रीवस्त्वथ तद्वाक्यमाभाष्य च विमृश्य च।
ततः शुभतरं वाक्यमुवाच हरिपुंगवः।
स दुष्टो वाप्यदुष्टो वा किमेष रजनीचरः।
ईदृशं व्यसनं प्राप्तं भ्रातरं यः परित्यजेत्।
को नाम स भवेत्तस्य यमेष न परित्यजेत्। [5]
वानराधिपतेर्वाक्यं श्रुत्वा सर्वानुदीक्ष्य च।
ईषदुत्स्मयमानस्तु लक्ष्मणं पुण्यलक्षणम्।
इति होवाच काकुत्स्थो वाक्यं सत्यपराक्रमः।
अनधीत्य च शास्त्राणि वृद्धाननुपसेव्य च।
न शक्यमीदृशं वक्तुं यदुवाच हरीश्वरः। [10]
अस्ति सूक्ष्मतरं किंचिद्यथात्र प्रतिभाति मे।
प्रत्यक्षं लौकिकं चापि विद्यते सर्वराजसु।
अमित्रास्तत्कुलीनाश्च प्रातिदेश्याश्च कीर्तिताः।
व्यसनेषु प्रहर्तारस्तस्मादयमिहागतः।
अपापास्तत्कुलीनाश्च मानयन्ति स्वकान्हितान्। [15]
एष प्रायो नरेन्द्राणां शङ्कनीयस्तु शोभनः।
यस्तु दोषस्त्वया प्रोक्तो ह्यादानेऽरिबलस्य च।
तत्र ते कीर्तयिष्यामि यथाशास्त्रमिदं शृणु।
न वयं तत्कुलीनाश्च राज्यकाङ्क्षी च राक्षसः।
पण्डिता हि भविष्यन्ति तस्माद्ग्राह्यो विभीषणः। [20]
अव्यग्राश्च प्रहृष्टाश्च ते भविष्यन्ति संगताः।
प्रवादश्च महानेष ततोऽस्य भयमागतम्।
इति भेदं गमिष्यन्ति तस्माद्ग्राह्यो विभीषणः।

---

B4 सोमविलोपिन. —(l. 75) B1 चादादि (for देवादि-). V1 सदा च वै तात (for तथा च देवादि-). —(l. 76) B1 पापभव; B3 पापतर. —(l. 77) B4 प्रियानुजे. Ñ2 V1 B1 D9 नित्यशः (for नित्यम्). —(l. 78) B1-3 यथा. V1 विमार्गे (for विमाने). B4 च (for तु). B1-3 यथा (for यथा). —(l. 81) V1 परं (for च ते). B1 नित्यसुखानि यानि च. —(l. 84) B4 विभीषण च (for तं ध्यायमानं). —(l. 86) B1 सुकृतस्य. —(l. 89) B1 सांप्रतं (for शाश्वतं). —(l. 90) D9 धर्मविधानं. —(l. 91) Ñ2 स कृत्स्न (for कृत्स्नस्य). B4 गच्छ स (for गच्छस्व). —(l. 92) Ñ2 D9 परमं भद्रं (for वचनं तत्र). —(l. 93) Ñ1 तदतिष्ठत्. —(l. 94) Ñ2 B2.4 D9 नमस्कृत्य. Ñ1 D9 महादेवं (for शिवं देवं). —B1 om. l. 96. V1 reads l. 96 twice (var.) —(l. 96) V1 (both times) यत्र रामो (by transp.). V1 (first time) विभीषण (for महाबल°).

### 8

(l. 1) M1.3 आक्रम्य, Cv.r.m.g.t as above (for आभाष्य). —(l. 3) D5-7 M1 Cm.g ग-, Cr.k.t as above (for स). —(l. 4) G1 damaged for व्यसनं प्रा°. G1 य, Cv as above (for य). —T3 om. (hapl.) l. 5. —(l. 5) M3 राम (for नाम). —(l. 6) D5 उदीक्ष्य, D10.11 T3 G1 M1.2.3 उदी( D11 °दी )क्ष तु (for उदीक्ष्य च). —(l. 7) D6 T3 M3 विस्मयमानस्तु. D6.7 शुभलक्षणः D11 पुण्यलक्ष्मणः; G3 पार्श्वतः स्थित (for पुण्यलक्षणम्). —(l. 8) T3 वाक्यविशारद° (for सत्यपराक्रम°). —(l. 9) G3 damaged for वृद्धाननु. —(l. 11) M3 Ck अति-; Cr.m.g.t as above (for अस्ति). T2 सूक्ष्मतमं. D6 T1 किं तु; T3 किं नु; Cr.g.k.t as above (for किंचिद्). D6.7 T G1.2 M2.3.5 यदत्र, D9 यदद (for यथात्र). D6.10.11 T2.3 G1.2 Ct मा, D5 मम (for मे). —(l. 12) D6 reads प्रत्यक्षं in marg. D6 T3 G3 M वा (for च). D10.11 वर्तेते (for विद्यते). —(l. 14) G3 damaged for दयमिहा —(l. 16) T3 M3 शोभन (for शोभन°). —(l. 18) D6 तत्र (for तत्र). G3 om. ते (subm.). —(l. 19) D11 राजस°, G1 damaged (for राक्षस). —(l. 21) M1.3 अभव्याश्च; Cv as above (for अव्यग्राश्च). D1 T3 G3 Cv.r प्रहृष्टाश्च; Cg.t as above (for प्रहृष्टाश्च). D5 T2.3 G1 M1.2.3 ते (for second च). G3 अव्यग्राः प्रहृष्टाः (for the prior half). D6 T1.3 G M न (for ते). T3 भविष्यति न संगताः (for the post. half). —(l. 22) D6.7.10.11 T3 G3 M1.2 Cm.g.k.t प्रवादस्तु, M3 प्रमादश्च, Cv.r mp as above (for प्रवादश्च). D7 एवं; G3 अत्र, Cv.m.k.t as above (for एष). D6 ततोऽस्य; D10.11 Cl.t (S)-तोऽन्यस्य, T3 ततोऽन्य ; Cv as above (for ततोऽस्य). D5 T1.2 ततो विस्मयमागत (for the post. half).

न सर्वे भ्रातरस्तात भवन्ति भरतोपमाः ।
मद्विधा वा पितुः पुत्राः सुहृदो वा भवद्विधाः ॥ [25]
एवमुक्तस्तु रामेण सुग्रीवः सहलक्ष्मणः ।
उत्थायेदं महाप्राज्ञः प्रणतो वाक्यमब्रवीत् ॥
रावणेन प्रणिहितं तमवेहि विभीषणम् ।
तस्याहं निग्रहं मन्ये क्षमं क्षमवतां वर ॥
राक्षसो जिह्मया बुद्ध्या संदिष्टोऽयमिहागतः । [30]
प्रहर्तुं त्वयि विश्वस्ते प्रच्छन्नो मयि वानघ ॥
लक्ष्मणे वा महाबाहो स वध्यः सचिवैः सह ।
रावणस्य नृशंसस्य भ्राता ह्येष विभीषणः ॥
एवमुक्त्वा रघुश्रेष्ठं सुग्रीवो वाहिनीपतिः ।
वाक्यज्ञो वाक्यकुशलं ततो मौनमुपागमत् ॥ [35]

9

After 6 13 5 D5-7 10 11 S ins

तस्य तद्वचनं श्रुत्वा रामो वचनमब्रवीत् ।
वचसा सान्त्वयित्वैनं लोचनाभ्यां पिबन्निव ॥
आख्याहि मम तत्त्वेन राक्षसानां बलाबलम् ।
एवमुक्तं तदा रक्षो रामेणाक्लिष्टकर्मणा ।
रावणस्य बलं सर्वमाख्यातुमुपचक्रमे ॥ [5]
अवध्यः सर्वभूतानां गन्धर्वोरगरक्षसाम् ।
राजपुत्र दशग्रीवो वरदानात्स्वयंभुवः ॥
रावणानन्तरो भ्राता मम ज्येष्ठश्च वीर्यवान् ।
कुम्भकर्णो महातेजाः शक्रप्रतिबलो युधि ॥
राम सेनापतिस्तस्य प्रहस्त इति विश्रुतः । [10]
कैलासे येन संग्रामे माणिभद्रः पराजितः ॥
बद्धगोधाङ्गुलित्राणो अवध्यकवचो युधि ।
धनुरादाय तिष्ठन्स अदृश्यो भवतीन्द्रजित् ॥
संग्रामसमयव्यूहे तर्पयित्वा हुताशनम् ।
अन्तर्धानगतः शत्रूनिन्द्रजिद्धन्ति राघव ॥ [15]
महोदरमहापार्श्वौ राक्षसश्चाप्यकम्पनः ।
अनीकस्थास्तु तस्यैते लोकपालसमा युधि ॥
दशकोटिसहस्राणि रक्षसां कामरूपिणाम् ।
मांसशोणितभक्षाणां लङ्कापुरनिवासिनाम् ॥
स तैस्तु सहितो राजा लोकपालानयोधयत् । [20]
सह दैवैस्तु ते भग्ना रावणेन दुरात्मना ॥
विभीषणवचः श्रुत्वा रामो दृढपराक्रमः ।
अन्वीक्ष्य मनसा सर्वमिदं वचनमब्रवीत् ॥
यानि कर्मापदानानि रावणस्य विभीषण ।
आख्यातानि च तत्त्वेन ह्यवगच्छामि तान्यहम् ॥ [25]

—(l. 23) T3 कारिष्यति Cm g k t as above (for गमिष्यति) D10 11 G1 प्राप्ते Cv as above (for पश्चे) —(l. 24) T1 सर्वे च (for न सर्वे) G2 परमोपमा Cr m g k as above (for भरतो°) —(l. 25) G3 damaged for दो वा भव —(l. 27) M3 [प]न (for [इ]) D6 वच (for मवा) G3 प्रश्रितो Ct as above (for प्रणतो) —(l. 28) D5 7 T2 G1 2 M 2 मवेहि D7 10 11 G M1 2 निशाचर (for विभीषणम्) —(l. 30) T1 राक्षसा T3 रक्षसा Cr g as above (for राक्षसो) —(l. 31) T2 विश्वस्त D5 प्रहर्तुं D7 10 11 Ct विश्वस्ते G3 damaged M1 2 प्र छन्न (for प्रच्छन्नो) D6 T3 राघव D7 T2 G1 वानघ (for वानघ) —(l. 32) D6 लक्ष्मणेन (for लक्ष्मणे वा) D5 सह स (for स वध्य) —(l. 34) D7 M2 हरिश्रेष्ठ (for रघुश्रेष्ठ) —(l. 35) D7 T3 वाक्यकुशलस्य (for °कुशलं)

9

(l. 1) G3 damaged for तस्य त —(l. 4) D6 T2 उक्ते D6 7 11 T3 3 G M उक्तस् —(l. 6) G2 3 सोऽवध्य Cg as above (for अवध्य) D6 T1 देवानां Cg as above (for भूतानां) D6 T1 G1 M2 [स]गुर [M3 [अ]मर (for [उ]रग) D10 11 पक्षिणां (for रक्षसाम्) D7 देवगन्धर्वरक्षसां G3 गन्धर्वा * * * * सां (damaged) (for the post. half) —(l. 8) D7 M3 [अ]वरजो (for [अ]नन्तरो) G3 स (for च) —(l. 9) G2 3 °प्रतिमो बले Cg k t as above (for °बलो युधि) —(l. 10) G2 सौम्य (for राम) D7 10 11 G2 3 M1 2 Cg इति वा (D10 11 वै) T2 युधि वि G1 वा वि M1 2 इति वै (for इति वि) —(l. 11) D6 T2 3 M3 लङ्कायां (for कैलासे) D10 11 G2 3 समरे (for संग्रामे) D7 10 मणिभद्र Cg as above (for मा°) G3 प्रतापवान् (for पराजित°) —(l. 12) Note hiatus between the two halves D5 10 11 T2 3 G3 M3 [अ]ङ्गुलित्रश्च G1 damaged Cr m g as above (for [अ]ङ्गुलित्राणो) D7 G3 M1 2 3 ह्यवध्य M3 त्ववध्य Cg as above (for अवध्य) —(l. 13) Note hiatus between the two halves D7 10 11 वसिष्ठन् T1 तिष्ठन् M1 2 सगुणम् (for तिष्ठन्स) G2 3 °बहुशो (to avoid hiatus) (for अदृश्यो) —(l. 14) D7 10 11 T1 M1 2 Cr t समरे Cm g as above (for संग्राम) D6 T1 समये D7 10 11 Ct g (D7 स)मर M1 2 स सम Cr m g as above (for समय) G2 3 संग्रामे समभिव्यूहे (G1 °व्यूहे) M3 संग्रामे च समव्यूहे (for the prior half) —(l. 15) D6 M1 2 शत्रून् D10 11 श्रीमान् (for शत्रून्) D6 T2 3 विद्धिष्यति (for इन्द्रजिद्धन्ति) —(l. 17) D10 11 M1 2 Ck t अनीकपास G1 अनीकपस्य Cg as above (for अनीकस्थास) M3 ते सर्वे (for तस्यैते) —D7 om (hapl.) from the post. half up to the prior half of l. 20 G1 लोकपालोपमा युधि (for the post. half) —(l. 18) G3 damaged for दशकोटिस —(l. 19) D10 11 T1 M3 भक्षाणां (for भक्षाणां) —(l. 21) D6 7 T2 3 भग्नास्ते (by transp.) (for ते भग्ना) D6 G2 M1 2 Cg महात्मना (for दुरात्मना) —(l. 22) G1 रामतो रघुनन्दन (for the post. half) D7 10 11 G2 3 M2 3 विभीषणस्य तु वचनं श्रुत्वा (G3 °वः श्रुत्वा स) रघुनन्दन (G3 M3 °नन्दनः) —(l. 23) D7 मनसा (for मनसा) G3 पूर्वम् (for सर्वम्) G3 damaged for मिदं वचन —(l. 24) T2 यानि कर्म विपाकानि (for the prior half) ✻ Cg कर्मापदानानि अपदानं कर्मवृत्तमित्यमरः । शौर्यकथनं बलवत्तया कर्मवृत्तमुच्यते । °विस्तृतान्याख्यानानि

अहं हत्वा दशग्रीवं सप्रहस्तं सहात्मजम् ।
राजानं त्वां करिष्यामि सत्यमेतद्ब्रवीमि ते ।
रसातलं वा प्रविशेत्पातालं वापि रावणः ।
पितामहसकाशं वा न मे जीवन्विमोक्ष्यते ।
अहत्वा रावणं सङ्ख्ये सपुत्रबलबान्धवम् । [30]
अयोध्यां न प्रवेक्ष्यामि त्रिभिस्तैर्भ्रातृभिः शपे ।
श्रुत्वा तु वचनं तस्य रामस्याक्लिष्टकर्मणः ।
शिरसावन्द्य धर्मात्मा वक्तुमेवोपचक्रमे ।

## 10

After Sarga 13, D6-7.10.11 S ins.:

ततो निविष्टां ध्वजिनीं सुग्रीवेणाभिपालिताम् ।
ददर्श राक्षसोऽभ्येत्य शार्दूलो नाम वीर्यवान् ।
चारो राक्षसराजस्य रावणस्य दुरात्मनः ।
तां दृष्ट्वा सर्वतोऽव्यग्रं प्रतिगम्य स राक्षसः ।
आविश्य लङ्कां वेगेन राजानमिदमब्रवीत् । [5]
एष वानरऋक्षौघो लङ्कां समभिवर्तते ।
अगाधश्चाप्रमेयश्च द्वितीय इव सागरः ।
पुत्रौ दशरथस्येमौ भ्रातरौ रामलक्ष्मणौ ।
उत्तमायुधसम्पन्नौ सीतायाः पदमागतौ ।
एतौ सागरमासाद्य संनिविष्टौ महाद्युती [10]
बलं चाकाशमावृत्य सर्वतो दशयोजनम् ।
तत्त्वमेतन्महाराज क्षिप्रं वेदितुमर्हसि ।
तव दूता महाराज क्षिप्रमर्हन्त्यवेक्षितुम् ।
उपप्रदानं सान्त्वं वा भेदो वात्र प्रयुज्यताम् ।
शार्दूलस्य वचः श्रुत्वा रावणो राक्षसाधिपः । [15]
उवाच सहसा व्यग्रः सम्प्रधार्यार्थमात्मनः ।
शुकं नाम तदा रक्षो वाक्यमर्थविदां वरम् ।
सुग्रीवं ब्रूहि गत्वाशु राजानं वचनान्मम ।
यथा संदेशमक्लीबं श्लक्ष्णया परया गिरा ।
त्वं वै महाराज कुलप्रसूतो [20]
महाबलश्चर्क्षरजःसुतश्च ।
न कश्चिदर्थस्तव नास्त्यनर्थ-
स्तथापि मे भ्रातृसमो हरीश ।
अहं यद्यहरं भार्यां राजपुत्रस्य धीमतः ।
किं तत्र तव सुग्रीव किष्किन्धां प्रति गम्यताम् । [25]
न हीयं हरिभिर्लङ्का शक्या प्राप्तुं कथंचन ।
देवैरपि सगन्धर्वैः किं पुनर्नरवानरैः ।
स तथा राक्षसेन्द्रेण संदिष्टो रजनीचरः ।
शुको विहंगमो भूत्वा तूर्णमाप्लुत्य चाम्बरम् ।
स गत्वा दूरमध्वानमुपर्युपरि सागरम् । [30]
संस्थितो ह्यम्बरे वाक्यं सुग्रीवमिदमब्रवीत् ।

---

हस्त्यर्थं ।, Ct: कर्मापदानानि युधि कर्मनिवर्तितशौर्याणि. ❀ —(l. 25) D10 मख्यातानि. G1 हि (for च). M3 आख्याभि तानि (for आख्यानानि च). —(l. 26) D6 T1.2 M3 ममोभव (for सदाभवम्). —(l. 27) T3 एव (for एतद्). D10.11 शृणोतु मे (for ब्रवीमि ते). —(l. 28) D6 T1 M1.2 वा स; T3 चापि (for वापि). G2 राक्षसः (for रावणः). —(l. 29) G2 damaged for वा न मे. —(l. 30) T2 हत्वा तु (for अहत्वा). M3 समित्र (for सपुत्र-). D7.10.11 G1 -जन-; G2.3 -ज्ञाति-; M1.2 -भ्रातृ- (for -बल-). —(l. 31) T3 तु (for न). M3 भ्रातृभिस्त्रिभिः शपे (for the post. half). —(l. 32) M1.2 स विस्मितः (for [अ]क्लिष्टकर्मणः). —(l. 33) M1.2.3 चरणौ (for धर्मात्मा). ❀ Cr: शिरसावन्द्येत्यत्र आमन्त्र्येति पदच्छेदः ।; so also Cg. ❀ D7.10.11 G प्रचक्रमे (for [उ]पचक्रमे).

10

(l. 1) D11 विनिष्टां (meta.) (for निविष्टां). —(l. 4) G1 तद्; G2 M6 त; Cm.k.t as above (for तां) ❀ Ck. तामिति पदम् । वाहिनीमित्यर्थः ।; so also Ct. ❀ D6.7.10.11 T3 M3 Cm सर्वतोऽव्यग्र (D6 °ग्रा); T1 G सर्वमव्यग्र (T2 °ग्रां) (for सर्वमव्यग्र). D6 T1 प्रतिगृह्य (for °गम्य). G2 damaged for स राक्षस.. —(l. 5) K (ed.) प्रविश्य (for आविश्य). D6 T1.2 M3 रावणं वाक्यम्, Cm as above (for राजानमिदम्). —(l. 6) D6.10.11 T3 G2.3 M3.4 एष वै वानरर्क्षौघो (D6 °र्क्षौ यो, G2 °र्क्षौघौ) (for the prior half). —(l. 8) D6 M3 [ए]तौ (for [इ]मौ). —(l. 9) D10.11 उत्तमौ रूप- (for उत्तमायुध). T3 M3 पदवीं गतौ, Cr.m.g.k.t as above (for पदमागतौ). —(l. 10) D6 T1.2 G2 महाबलौ; D10.11 °द्युते; G2 ***तौ (damaged) (for महाद्युती). —(l. 11) D6 सकाशम्; M3 आकाशम् (for चाकाशम्). T3 G2 आविश्य (for आवृत्य). —(l. 12) D10.11 T3 M2.3 Cm.g.t तत्त्वभूत; G1.2 तत्त्वपूर्वं; G3 तत्त्व ब्रूमे (for तत्त्वमेतत्). D6 महाभाग (for महाराज). —D6 om. (hapl.) from the post. half up to the prior half of l. 13. G2 क्षिप्रमर्हति वेदितुं (for the post. half). ❀ Cv: तत्त्वभूत महाराज क्षिप्रं वेदितुमर्हसीति सम्यक्पाठः ।; Cr: तत्त्वपूर्वं महाराजेति पाठः. ❀ —(l. 13) D6 अर्हसि (for अर्हन्ति). D7.10.11 वेदितुं (for [अ]वेक्षितुम्). —(l. 14) G1 वा सान्त्व (by transp.). M3 भेद (for भेदो). —(l. 15) D7.10.11 M3 राक्षसेश्वरः (for राक्षसाधिपः). —(l. 16) G2 damaged for सा व्यग्रः; T3 सहसा व्यग्रः. M3 वीर (for व्यग्र). —(l. 17) D10.11 साधु (for नाम). T3 -विशारद, M1.2.3 विदां वर (for -विदां वरम्). —(l. 18) D6 T1.2 M3 त्व; T3 G1 तु (for [आ]शु). T3 G2 वचन (for वचनात्). —(l. 19) D6 अक्लिष्ट (for अक्लीब). —(l. 20) D6.7 T1.2 कुले (for कुल). —(l. 22) D7.10.11 कश्चन (for कश्चिद्). T3 सोऽप्यनर्थस्; T1 G1 M3 नाप्यनर्थस्; G2 ***र्थस् (damaged) (for नास्त्यनर्थस्). —(l. 23) M3 तव (for तथा). G1 M1.2 [अ]सि, M3 हि (for [अ]पि). D6 M3 हरीश्वर (for हरीश). —(l. 25) M1.2 अत्र (for तत्र). —(l. 26) D6 T3 M3 च (for हि). D6-7.10.11 T1.2 प्राप्तुं शक्या (by transp.). —(l. 27) G1 न देवैरपि (for देवैरपि स-). ❀ Cg: अत्र नरग्रहणात् पूर्वार्धे हरिपदं नरोपलक्षकं बोध्यम्. ❀ —(l. 28) D6.10.11 T1 तदा (for तथा). G1 damaged for ष्टो रज. —(l. 29) D6 M3 वसुधा (for आप्लुत्य). —(l. 31) D6.7 T1.2 [s]पि

एवमुक्तं यथादिष्टं रावणेन दुरात्मना ।
तं प्रापयन्त वचनं तूर्णमाप्लुत्य वानराः ॥
प्रापयन्त तदा क्षिप्रं लोप्तुं हन्तुं च मुष्टिभिः ।
स तैः प्लवंगैः प्रसभं निगृहीतो निशाचरः । [35]
गगनाद्भूतले चाशु परिगृह्यावतारितः ।
वानरैः पीड्यमानस्तु शुको वचनमब्रवीत् ।
न दूतान्घ्नन्ति काकुत्स्थ वार्यन्तां साधु वानराः ।
यस्तु हित्वा मतं भर्तुः स्वमतं संप्रभाषते । [40]
अनुक्तवादी दूतः सन्स दूतो वधमर्हति ।
शुकस्य वचनं श्रुत्वा रामस्तु परिदेवितम् ।
उवाच मा वधिष्टेति घ्नतः शाखामृगर्षभान् ।
स च पत्रलघुर्भूत्वा हरिभिर्दर्शिते भये ।
अन्तरिक्षे स्थितो भूत्वा पुनर्वचनमब्रवीत् ।
सुग्रीव सत्त्वसम्पन्न महाबलपराक्रम । [45]
किं मया खलु वक्तव्यो रावणो लोकरावणः ।
स एवमुक्तः प्लवगाधिपस्तदा
प्लवंगमानामृषभो महाबलः ।
उवाच वाक्यं रजनीचरस्य
चारं शुकं तूर्णमदीनसत्त्वः । [50]

न मेऽसि मित्रं न तथानुकम्प्यो
न चोपकर्तासि न मे प्रियोऽसि ।
अरिश्च रामस्य सहानुबन्धः
स मेऽसि वालीव यथार्ह वध्य ।
निहन्म्यहं त्वां ससुतं सबान्धवं [55]
सज्ञातिवर्गं रजनीचरेश ।
लङ्कां च सर्वां महता बलेन
क्षिप्रं करिष्यामि समेत्य भस्म ।
न मोक्ष्यसे रावण राघवस्य
सुरैः सहेन्द्रैरपि मूढ गुप्तः । [60]
अन्तर्हितः सूर्यपथं गतो वा
तथैव पातालमनुप्रविष्टः ।
गिरीशपादाम्बुजसंगतो वा
हतोऽसि रामेण सहानुजस्त्वम् ।
तस्य ते त्रिषु लोकेषु न पिशाचं न राक्षसम् । [65]
त्रातारं नानुपश्यामि न गन्धर्वं न चासुरम् ।
अवधीस्त्वं जरावृद्धं गृध्रराजं जटायुषम् ।
किं नु ते रामसांनिध्ये सकाशे लक्ष्मणस्य वा ।

---

(for हि) D14 [अ]थ (for [अ]न्तरे) D5 इदं वचनम् (for सुग्रीवमिदम्) —(l 32) G3 [उ]दिष्ट (for [आ]दिष्ट) —(l 33) D7 G1 Ct तद् Cg k as above (for तं) D4 M1 2 उत्प्लुत्य, Cv as above (for आप्लुत्य) —(l 34) D7 प्रारभत (for प्रापयन्त) D5 T1 2 M2 3 ऽपि (for तदा) M5 नेतुं, Cm t as above (for लोप्तुं) M1 3 transp लोप्तुं and हन्तुं —(l 35) D10 11 सर्वैः (for स तैः) T3 प्रसंगैः (for प्लवगैः) D1 विगृहीतो M5 प्रगृहीतो (for निगृ°) —(l 36) D5 T1 चापि (for चाशु) T3 भूतलेनाशु D7 10 11 प्रतिगृह्य (for परि°) D5 T2 M3 4 निपातितः (for [अ]वतारितः) —(l 37) G3 बध्यमानस्तु M1 2 बध्यमानस्तु (for पीड्य°) M2 3 वाक्यमथ (for वचनम्) —D4 repeats l 38 after l 44 —(l 38) G2 M3 हन्ति (for घ्नन्ति) D5 (second time) कथंचिदपि राघव (for the post half) —(l 39) D5 परिभाषते D10 11 समुपालभेत् Ck as above (for संप्रभाषते) —(l 40) T2 न (for स) —(l 41) D1 10 11 transp श्रुत्वा and रामस्तु D4 1 T1 G M5 स (for तु) M3 परिदेवनं Cm g t as above (for °देवितम्) —(l 42) T2 शाखामृगाधिपान् (for °मृगर्षभान्) D7 M5 शाखामृगगणांस्तथा (M6 °रा) (for the post half) ❀ Cg मा वधिष्टेति एकैकोऽस्त्वभिप्रायेणैकवचनम् । वधिष्टेत्यन्यत्रार्षं सन्धि ।, Ck मा वधिष्टेति । मा वधिष्टेति यावत् । आङ्योगादडभावः । हनो वध इति लुङि चानि वधादेशः । एकवचनमार्षम् । so also Ct ❀ —(l 43) D5 T1 2 पक्षी D7 पक्षौ T2 पत्रि (for पत्र) T3 लघुः (for लघुः) G [ऽ]भये (for भये) ❀ Cv पत्रलघु पत्रवल्लघु स (सु?)क्षितपक्ष इति यावत् । so also Cr m g Cr adds दर्शितेऽभय इत्यत्र अभय इति पदच्छेदः ।, Cg adds भये दर्शितेऽपि । Ck हरिभिरभये राघववचसा दर्शिते, अवगतमित्रे सति पत्रलघु पत्रवल्लेन शीघ्रमतिरन्तरिक्षे स्थित्वा पुनर्वचनमब्रवीत् । पत्रलघु, लघुपक्ष इत्यर्थे इत्यन्य । तादृशस्य कथमन्तरिक्षे स्थिती रामवचनं तत्कथं कृतं स्यादिति चेदेः, so also Ct ❀ —(l 44) T2 M3 अन्तरिक्षं, G3 damaged (for अन्तरिक्षे) D5 स्थितो G3 ततो, M1 2 शुक (for स्थितो) M2 3 स्थित्वा (for भूत्वा) D7 G1 शुक्रो (for पुनर्) —(l 47) G3 M3 तथा (for तदा) —(l 48) G2 अधिपो (for ऋषभो) —(l 50) D5 T3 दूतं (for चारं) D7 10 11 T3 शुकम् D7 M3 दीनम् T3 G3 M1 2 क्रुद्धम् (for तूर्णम्) G1 2 M5 सत्त्वः Cg as above (for °सत्त्वः) —(l 51) G1 [ऽ]सि Cg as above (for ऽसि) —(l 52) M3 नोपकर्ता (for चो°) D7 [अ]पि, M5 म (for first [अ]सि) D7 च (for second ऽसि) —(l 53) G3 सदा; Cg as above (for सह) D7 [अ]नुयायी, T3 [अ]नुरक्त (for [अ]नुबन्ध) —(l 54) D10 11 M1 2 वधोऽसि, T2 3 G1 M5 समोऽसि Cg as above (for स मेऽसि) —(l 55) D7 10 11 T3 G1 M3 5 सबलं M1 2 सबन्धुं (for सबान्धवं) —(l 56) T3 सजाति (for सज्ञाति) —(l 58) G3 damaged for क्षिप्रं करि° D10 11 सर्वां (for क्षिप्रं) —(l 59) D5 4 (in marg) T M1 2 राघवेण Cr as above (for राघवस्य) ❀ Cr m g l t राघवस्य राघवात् । (Cg पञ्चम्यर्थे षष्ठी) ❀ —(l 60) D7 10 11 सर्वैः (for सुरैः) G3 महेन्द्र, M5 सुरेन्द्रैः (for सहेन्द्रैः) D7 T1 2 G1 2 M3 गूढ Cg k as above (for मूढ) ❀ Cg मूढेति सम्बुद्धि ❀ —(l 61) D1 अन्तर्हितं D7 10 11 [ऽ]पि (for वा) —D5 7 T1 G M om l 63 64 —(l 63) T3 सुगतोऽपि (for संगतो) —(l 64) D6 T3 [आ]त्मजस् (for [अ]नुजस्) —(l 65) T3 तव (for ते) T1 न * * * षु (for तस्य ते त्रिषु) M1 2 देवं नापि (for पिशाचं न) —(l 66) D5 नाभिपश्यामि D7 G3 नापि गच्छामि G1 M3 अनुप° Ck as above (for नानुपश्यामि) —(l 67) M3 यत् (for त्वं) M2 अक्षयं किं (for गृध्रराजं)

हृता सीता विशालाक्षी यां त्वं गृध्र न बुध्यसे ।
महाबलं महात्मानं दुराधर्षं सुरैरपि । [70]
न बुध्यसे रघुश्रेष्ठं यस्ते प्राणान्हरिष्यति ।
ततोऽब्रवीद्वालिसुतो ह्यङ्गदो हरिसत्तमः ।
नायं दूतो महाराज चारकः प्रतिभाति मे ।
तुलितं हि बलं सर्वमनेनात्रैव तिष्ठता ।
गृह्यतां मा गमल्लङ्कामेतद्धि मम रोचते । [75]
ततो राज्ञा समादिष्टाः समुत्पत्य वलीमुखाः ।
जगृहुश्च बबन्धुश्च विलपन्तमनाथवत् ।
शुकस्तु वानरैश्चण्डैस्तत्र तैः सम्प्रपीडितः ।
व्याक्रोशत महात्मानं रामं दशरथात्मजम् ।
लुप्येते मे बलात्पक्षौ भिद्येते च तथाक्षिणी । [80]
यां च रात्रिं मरिष्यामि जाये रात्रिं च यामहम् ।
एतस्मिन्नन्तरे काले यन्मया ह्यशुभं कृतम् ।
सर्वं तदुपपद्येथा जह्यां चेद्यदि जीवितम् ।
नाघातयत्तदा रामः श्रुत्वा तत्परिदेवनम् ।
वानरानब्रवीद्रामो मुच्यतां दूत आगतः । [85]

Colophon

ततः सागरवेलायां दर्भानास्तीर्य राघवः ।
अञ्जलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधेः ।
बाहुं भुजगभोगाभमुपधायारिसूदनः ।
जातरूपमयैश्चैव भूषणैर्भूषितं पुरा ।
वरकाञ्चनकेयूरमुक्ताप्रवरभूषणैः । [90]
भुजैः परमनारीणामभिमृष्टमनेकधा ।
चन्दनागरुभिश्चैव पुरस्तादधिवासितम् ।
बालसूर्यप्रतीकाशैश्चन्दनैरुपशोभितम् ।
शयने चोत्तमाङ्गेन सीतायाः शोभितं पुरा ।
तक्षकस्येव संभोगं गङ्गाजलनिषेवितम् । [95]
संयुगे युगसंकाशं शत्रूणां शोकवर्धनम् ।
सुहृदानन्दनं दीर्घं सागरान्तव्यपाश्रयम् ।
अस्यता च पुनः सव्यं ज्याघातविगतत्वचम् ।

---

D6 किमत्र; T1,2 M3 अप( T2 °र )स्त्र ( for क्षत्रसुत्व् ). G गृध्र-राजानमद्य( G2 °म ) ( for the post. half ). —( l. 68 ) D7 तु ( for नु ). D7,10,11 G1,3 च ( for वा ). —( l. 69 ) M1,2 transp. हृता and सीता. G2 यां त्वं बुध्य न गृध्रसे ( for the post. half ). —( l. 70 ) D6,8 T1,2 G2 M3,4 दुर्धर्षममरैरपि ( for the post. half ). —( l. 71 ) G2 नरश्रेष्ठ; Ck.t as above ( for रघु° ). —( l. 72 ) D6,8 T1,2 M3,4 तु, D7,10,11 [ऽ]पि ( for हि ). —( l. 73 ) D7,10,11 महाप्राज्ञ ( for °राज ). D6,7 T2 G1,3 M1,2,4 Cr g चारि( G1,3 °री )कः, Ck as above ( for चारकः ). G2 मा ( for मे ). ॐ Cr : चारी ( °रि ? ) कः चारः चर उदरस्यास्तीति चारिकः अत इनिठनाविति ठन् ।, Cg : चारिकः स्वार्थे ठक्. ॐ —( l. 74 ) D7,10,11 तव, G2 [प]वात्र, G2,3 [अ]शाव- ( for [अ]त्रैव ). —( l. 75 ) G1 M3 गा गमेद् ( for मा गमल् ). G2,3 प्रगृह्यतां दुरात्मायम् ( for the prior half ). —( l. 76 ) D6,8 T1,2 M3 समुत्प्लुत्य ( for समुत्पत्य ). —( l. 77 ) D6 जगृह्य, T2 निगृह्य ( for जगृहुश्च ). D7 तं ( for second च ). G2 * * * न्तम् ( damaged ) ( for विलपन्तम् ). —( l. 78 ) D6 T1,2 च ( for तु ). D6 om. from श्च up to च. T1,2 तथ, G2 चैण्ड्य ( corrupt ) ( for चण्डैस्. ). T2 तत्रैव ( for तत्र तै° ). —( l. 79 ) D7,10,11 व्याजुघोष ( for व्याक्रोशत ). —( l. 80 ) D6 G2 M3,4 Ck लुप्यते, Ct as above ( for लुप्येते ). G2 च तथा; M4 च बलात् ( for मे बलात् ). D6,11 G2 M3,4 भिद्यते ( for भिद्येते ). D6,7,10,11 M1,2 मे ( for च ). D6 तदा ( for तथा ). M2 transp. तथा and [अ]क्षिणी. —( l. 81 ) D6 रात्रौ ( for first रात्रिं ). D6,7 रात्रौ ( for second रात्रिं ). T2 तावद्, M1,2 यावद्; Cr.m g k.t as above ( for यामहम् ). ॐ Cr : यां च रात्रिमित्यादि । रात्रिशब्दोऽहोरात्रपरः । यां च रात्रिं प्रतिदिनमिति मरिष्यामि यामि च जाये भवामि " अनित्यतयाविमत्वमादित्यादिति श्रुत्यायाः । Cr : जाये भवामि जातवानस्मि । अयमाश भावे , so also Cg k.t. ॐ —( l. 82 ) M1,2 यत्र काले तु, Cv as above ( for अन्तरे काले ). T2 [अ]पि ( for हि ). G2 damaged for कृतम्. —( l. 83 ) G2 तत्सर्वम् ( by transp. ); M2 सर्वं त्वम् ( for सर्वं तद् ). G1 अद्य, M1,2 इह; Cv as above ( for यदि ). ॐ Cg : चेद्यदीति अविकल्पार्थं पदम् । ॐ —( l. 84 ) T2 नाघातयद् ( for नाघातयद् ). D6 परिवेदन; D6,7,10,11 T2 M1,2,4 परिदेवित ( for परिदेवनम् ). —( l. 85 ) M1,2 चाब्रवीद् ( for अब्रवीद् ). D6 आनतः ( for आगत° ).

Colophon. —*Sarga no.* ( figures, words or both ): D6-7,10,11 T1,2 G M 20; T2 19. —After colophon, G M1,2,4 conclude with श्रीरामाय नमः.

—( l. 87 ) T2 G1 Cv*p* महोदधिं, G1 यथाविधि; Cv as above ( for महोदधेः ). —M2 transp. l. 88 and l. 89. —( l. 88 ) D6,10,11 भुजग-; Cr.m g as above ( for भुजग- ). —( l. 89 ) D10,11 सदा ( for पुरा ). —( l. 90 ) D7,10,11 मणि ( for वर- ). —( l. 91 ) G1 असि-; G2 Ck परि, Cv.m.g.t as above ( for अभि- ). G2 अनेकशः; Cg.t as above ( for °धा ). ॐ Cr , रामस्य एकदारव्रतत्वात् परमनारीणामिति बहुवचनेन श्रेष्ठस्त्रीचारित्र्ये विवक्षिता' ।, so also Cm.g k.t. ॐ —( l. 92 ) D6 T2 -[अ]गुरुभिश्च ( for -[अ]गरुभिश्च ). D6,7,10,11 अभि- ( for अधि- ). D10,11 सेवित ( for -वासितम् ). —G2 reads l. 93 thrice. —( l. 93 ) *D6,7,10,11 G2 ( three times )* Cv -प्रकाशैश्च. Cr k. as above ( for -प्रतीकाशैश्च ). —D6 om. ( hapl. ? ) from चन्दनैर् up to तक्षक in l. 96. G2 ( first and second time ) अधिवासित, M2 चाप° ( for उपशोभितम् ). ॐ Cv : बालसूर्यप्रकाशैरिति विशेषणसामर्थ्याद् द्वितीय-चन्दनशब्दः कुङ्कुमपरः ।, so also Cm g.k.t. ॐ —( l. 94 ) M2 सेवितं ( for शोभितं ). —( l. 95 ) D6 T2 यथा भोग, G2 [ए]व भोगाभ ( for [ए]व संभोग ). —( l. 97 ) D6-7,10,11 M2 सुहृदां नन्दनं दीर्घ ( D7 दीर्घं ); G2 सुहृ * * * * * ( damaged ) ( for the prior half ). T2 संहार- ( for सागरान्त- ). —( l. 98 ) D6 अस्यतोय, T2 अस्यता तु, Cr as above ( for अस्यता च ). D6 T2 M2 -वितत- ( for -विगत- ). M2 भावत्

तिर्यक्च सह नक्षत्रैः संगतौ चन्द्रभास्करौ । [15]
भास्करांशुभिरादीप्तं तमसा च समावृतम् ।
प्रचकाशे तदाकाशमुल्काशतविदीपितम् ।
अन्तरिक्षाच्च निर्घाता निर्जग्मुरतुलस्वनाः ।
पुस्फुरुश्च पुनर्दिव्या दिवि मारुतपङ्क्तयः ।
बभञ्ज च तदा वृक्षाञ्जलदानुद्वहंश्च च । [20]
आरुजंश्चैव शैलाग्राञ्शिखराणि प्रभञ्जनः ।
दिविस्पृशो महामेघाः संगताः सुमहास्वनाः ।
मुमुचुर्वैद्युतानग्नींस्ते महाशनयस्तदा ।
यानि भूतानि दृश्यानि चुक्रुशुश्चाशनेः समम् ।
अदृश्यानि च भूतानि मुमुचुर्भैरवस्वनम् । [25]
शिश्यिरे चाभिभूतानि संत्रस्तान्युद्विजन्ति च ।
संप्रविव्यथिरे चापि न च पस्पन्दिरे भयात् ।
सह भूतैः सतोयोर्मिः सनागः सहराक्षसः ।
सहसाभूत्ततो वेगाद्भीमवेगो महोदधिः ।
योजनं व्यतिचक्राम वेलामन्यत्र संप्लवात् । [30]
तं तथा समतिक्रान्तं नातिचक्राम राघवः ।
तमुद्धतममित्रघ्नो रामो नदनदीपतिम् ।

---

वायु°; D7 वायु (for धातु). Ñ2 D9 च ह; D8–7.10.11 T3 तदा (for तथा). Ś D1–4.8.12 सरितश्च सरांसि च (for the post. half).—(l. 15) D8 सह म-; G1 तु सह (for च सह). Ś Ñ2 D1–4.8.12 चेरतुश्; D8 चारतुर् (for संगतौ). Ś D12 रवि°; D8 °भास्करैः (for चन्द्रभास्करौ).—After l. 15, Ś Ñ2 D1–4.8.9.12 G2.3 ins.:

4* तमसा च परिच्छन्नावुभौ न रेजतुस्तदा ।

[Ś1 D12 तु; D3.4 [अ]पि- (for च). D8.9 परिच्छिन्नाव; G2.3 प्रतिच्छन्नाव्. Ś D12 नोभौ तौ (for उभौ न). Ñ2 D1.2.3.9 न बभतुस; D4 नभ्रतुस् (for न रेजतुस्). G2.3 कृष्णेन महता तदा (for the post. half).]

—(l. 16) Ś Ñ2 D2–4.8.9.12 [अ]भि(D2 °पि)संवृत.—(l. 17) Ś Ñ2 D1.2.4.9.12 न चकाशे(D1 °से); D3 चकासे न. Ś D12 वियत्सर्वं; Ñ2 D1.9 च(D8 तु) तदह; D2 तदा सर्वम्; D3.4 तदा तत्र (with hiatus) (for तदाकाशम्). D4 T3 -निनादित (for विदीपितम्).—(l. 18) D1 हि (for च). Ś D12 ख जग्मुर्; Ñ2 D1–4.8.9 सजग्मुर्.—(l. 19) D8 T3 प्रस्फुराश्च, D7 प्रास्फुरश्च; T3 प्रस्फुराश्च; G1.3 पुस्फुरुश्च, M1.2 प्रनष्टाश्च G2.3 पुनर्दीप्ता; M3 घना दिव्या (for पुनर्दिव्या). Ś Ñ2 D1.9.12 प्रास्फुरश्चापि(D1 °ति) पश्चा(Ś D12 हि रुषा); D4 पुस्फुरुश्चातिपरुषा, D8 विस्फुरतश्च परुषा, D3 प्रस्फुराश्चापि परुषाः; D5 T3 प्रास्फुर(D6 * षेश्च) घना दिव्या; D8 प्रस्फुरश्चातिपरुषा, D10.11 Ck.t मधुप्रकर्षेण बहुर् (for the prior half). ※ Cm: पुस्फुरुश्चेति वा पाठः । ; Cg प्रस्फुरुश्चेत्. ※ D4 दिशि; D10.11 Ct दिव्य-; Ck दिव्या (for दिवि). Ś D8.12 -वद्गय; Ñ2 D2 -रंहसः; D3 -वलय (for पङ्क्तय).—(l. 20) G Cr बभञ्जुश्च. D8 T3 वेगाज् (for वृक्षाञ्). Ś Ñ2 D1.3.4.8.9.12 बभञ्ज च तरून्वायु; D2 बभञ्जोपवनं वायु (for the prior half). D7.10.11 Ct तदहन्मुद्ग°. G1.3 तदहन्ति च; G2 तदहंश्च च; M1.2 उद्वर्षयन्; M3 उदहन्नपि (for उद्वहंश्च च). Ś1 D12 समूलानुदपाटयत्, Ś2 समूलानुत्पाटयन्, Ñ2 D1.2.4.8.9 समूलानुद्वहंश्च च; D3 समूलानुद्धरन्परे (for the post. half).—(l. 21) D3 M1–3 Cg आरुजश्च. Ś Ñ2 D12 व्यारुजानि च शैलानां; D2.3.4 आरुजानि च शैलानां, D8 आभञ्जंश्च शैलानां; D9 अरुजन्नानि शैलांश्च (for the prior half). Ś D12 नभस्वता, Ñ2 D2 व्यापात्तदा; D1.3 च(D3 वि-)वायुना; D8 बहून्यपि; D4 व्यशीर्यत; D8 व्यधमत् सः; D10.11 बभञ्ज च (for प्रभञ्जन). ※ Cv.r: आरुजश्चैव शैलाग्राञ्शि(Cr °ग्र शि)खराणि प्रभञ्जन इति सम्यक् पाठः (Cr °ति सम्यक्) ।; Cg: आरुजन् अपीडयत् । बहुवचनमार्षम्. ※ —D11 om. l. 22.—(l. 22) G1 दिवि चापि. D6 T3 महावेगा (for °मेघाः). D7.10 T3 G2.3 M1.2 दिवि च स महावेगा (M1.2 °मेघा) (for the prior half). D6 T3 M3 मगता स ; D7.10 T2 M1.2 सहता: स- (T3 M1.2 सु-). Ś Ñ2 D1–4.8.9.12 दिवि गे च महाभुता स्वला भीषणस्वना.—Ñ2 om. l. 23–32. D2 om. l. 23–26. Ś D1.3.4.8.12 om. l. 23.—(l. 23) M1.2 म (for ते). G1 महाशयनस् (meta.) (for महाशनयस्).—Before l. 24, Ś D1.3.4.8.12 read l. 27.—(l. 24) G3 दृश्यते (for दृश्यानि).—M1.2 transp. the post. halves of l. 24 and 25. T1.3 G1 च शने. सम. Ś1 D3 दृश्यानि चैव भूतानि न चुक्रुशु (D4 °क्रुशुः) शनैरपि, Ś2 D1.3.12 दृश्यानि चैव भूतानि प्रजग्मु (Ś2 जग्मुर्वै; D12 °ग्मुर्वे [hypm.]) सभ्रम महत्; D8 दृश्यान्यपि च भूतानि न चुक्रुशु शनैरपि.—After l. 24, D8 reads l. 27.—D1.12 om. l. 25.—(l. 25) D6.8 T1.3 M1.2 चुक्रुशुर्; G3 रुरुदुर्; Cg.t as above (for मुमुचुर्). G1 भैरव स्वं. Ś जग्मुर्वै सम्भ्रम महत्; D3.4.8.9 प्रजग्मु संभ्रम महत् (for the post. half).—Ś D1.2.4.8.9.12 om. l. 26.—(l. 26) T2 (sup. lin. also) M3 सलिले, D5.7 T3 M चापि. D6 T3 तानि (for चाभि-). G1 समस्तानि, Ct as above (for सन्°). T3 सम त्रस्ता भ्रमति च (for the post. half).—(l. 27) Ś D1–4.8.12 ते च; Ñ2 D9 चैव (for चापि). D3 तत्र (for न च). Ś D1.4.12 प्रचस्कन्दिरे; Ñ2 D9 न चस्कन्दिरे, D3 चास्कन्दिरे, D1.8 न प्रस्कन्दिरे (for च पस्पन्दिरे).—(l. 28) Ñ2 सतोयश्च Ś D1–4.8.9.12 M1.2 सहभूतः सतोयश्च (M1.2 °तोय°) (for the prior half). D8 दानव , G1 राक्षसैः (for -राक्षसः). Ś1 D12 सनागश्च सदानव , Ś2 मनागाश्च सदानवाः; Ñ2 D1–4.8.9 सनागः (D3 °दः) सदानवः (for the post. half).—(l. 29) Ś Ñ2 D1–4.8.9.12 दुद्रुवे, D1 [आ]सीत्तदा; T1.3 G1 [अ]भूत्तदा (for [अ]भूत्ततो). Ñ2 D9 दुराद्; D3 T1.3 घोरो; M1.2 वेला (for वेगाद्).—Ś D1–4.8.9.12 om. l. 30–32.—(l. 30) T3 स्वनि ; Cm.t as above (for व्यति-).—(l. 31) G M तदा (for तथा).—(l. 32) G1 समुद्धतम्. ※ Cr: समुद्धतममित्रघ्नेति पाठः. ※

वध्यमानेषु सैन्येषु नदत्सु सुमहत्सु च ।
कूजतां स्वनतां चैव शब्दश्चासीत्सुदारुणः ।
रुधिरस्रावदिग्धाङ्गाः पुष्पिता इव किंशुकाः । [140]
वानरा राक्षसाश्चैव गैरिका इव चाभवन् ।
कबन्धानि समुत्पेतुर्ऋक्षवानररक्षसाम् ।
उत्पत्य निपतन्ति स्म नृत्यन्ते चापराणि च ।
संग्रामे वर्तमाने तु यमराष्ट्रविवर्धने ।
वज्रनाभो धनुर्गृह्य पृथुं समभिदर्दयत् । [145]
शरैश्च तीक्ष्णधारैस्तु कर्मारपरिमार्जितैः ।
पुनः शरशतेनैव क्षिप्रहस्तो निशाचरः ।
पृथुर्विद्धः शरैर्गाढैरुत्पाट्य शिखरं गिरेः ।
भ्रामयित्वा मुमोचाशु वज्रनाभस्य रक्षसः ।
मुक्तं तु शिखरं दृष्ट्वा सपत्नस्तं तदाशुगैः । [150]
शरैश्चिच्छेद सहसा तद्विकीर्णं पपात ह ।
पातिते गिरिशृङ्गे तु पृथुर्दृष्ट्वा महाबलः ।
उत्पत्य पततां श्रेष्ठो रथस्य निपपात ह ।
अश्वांस्तस्य धनुस्तस्य बभञ्ज च महाबलः ।
अश्वाञ्जघान तरसा स्यन्दनं च बभञ्ज ह । [155]
रथे भग्ने ततः क्षिप्रं शूलं जग्राह राक्षसः ।
आजघानाथ शूलेन पृथुं वानरपुंगवम् ।
स तु शूलविभिन्नाङ्गः पृथुर्वानरपुंगवः ।
स जघान शिरोमध्ये मुष्टिना तं निशाचरम् ।
विह्वलं तमुपालभ्य मुष्टिपातेन राक्षसम् । [160]
पादयोः स तु जग्राह भ्रामयामास तं पुनः ।
भ्रामयित्वा ततः पृथ्व्यां वज्रनाभं निशाचरम् ।
निष्पिपेष पृथुः पश्चात्पुनरप्याजघान ह ।
रुधिराशो गवाक्षं तु आकर्णविनियोजितैः ।
शरैरशनिसंकाशैर्बाढोऽपि स चार्दयत् । [165]
स तु बाणविभिन्नाङ्गो गवाक्षो हरिसत्तमः ।
शिलापादपवर्षं च मुमोच सुमहद्बली ।
तच्छिलापादपं वर्षं निपात्य निशितैः शरैः ।
स शरैरग्निसंकाशैर्गवाक्षं तु न्यपातयत् ।
गवाक्षं पातितं दृष्ट्वा तारस्तु वनगोचरः । [170]
अभ्यद्रवत वेगेन रुधिराशं निशाचरम् ।
प्रगृह्य सालवृक्षं च भ्रामयामास सत्वरः ।
मुमोच सुमहाकायो निशाचरवधं प्रति ।
तमापतन्तं संप्रेक्ष्य शरेणैकेन सोऽच्छिनत् ।
वानरं दशभिर्विद्ध्वा सिंहनादं ननाद च । [175]
शरभूतं तु तं कृत्वा पातयित्वा च भूतले ।
रुधिराशो महावीर्यो व्यधमद्वानरं बलम् ।
वानराणां समन्तात्तु शरैः शतसहस्रशः ।
आवर्त इव तोयानां गतो याति निशाचरः ।
तस्य वानरसैन्यस्य अन्तकालस्तु सोऽभवत् । [180]
रुधिराशो दुराधर्षो राक्षसः शरचापधृत् ।
पातितैः पात्यमानैश्च गतसत्त्वैश्च मेदिनी ।
बभूव निखिला सर्वा पर्वतैरिव संवृता ।
रुधिरौघसमाकीर्णा कबन्धशतसंकुला ।
अनेकतनुवृत्ता तु दुर्गमार्गा वसुंधरा । [185]
एतस्मिन्नन्तरे काले गवाक्षो वनगोचरः ।
संज्ञां प्राप्य मुहूर्तेन तारश्च पुनरुत्थितः ।
गवाक्षश्च महाकायः शिलां गृह्य च सत्वरः ।
भ्रामयित्वा मुमोचैनां निशाचरवधं प्रति ।
अनिवार्यशिरां तां तु दृष्ट्वा राक्षसपुंगवः । [190]
उत्पपात रथाच्छीघ्रं खड्गमादाय चर्म च ।
ससारथिं सचक्रं च सध्वजं च सकूबरम् ।
रथं संचूर्णयामास सा शिला वानरेरिता ।
राक्षसं खड्गपाणिं तु समीक्ष्याभ्यागतमाहवे ।
गवाक्षः परिघं गृह्य तस्य चाभिमुखं ययौ । [195]
यावत्तु खड्गमुद्धारिणा क्षिप्रकारिणा ।
परिघेण हतस्तावत्पपात च ममार च ।
रुधिराशं हतं दृष्ट्वा कालदंष्ट्रो निशाचरः ।
अभ्यद्रवच्च वेगेन ऋषभं वानरर्षभम् ।
ऐरावतकुले जातमारूढः स गजोत्तमम् । [200]
छादयामास संक्रुद्धो ऋषभश्चापि दन्तिनम् ।
स गजं तूर्णमुत्पत्य ऋषभो वानरोत्तमः ।
तलेनाशनिकल्पेन कुम्भमध्ये ह्यताडयत् ।
तलप्रहाराभिहतो नादं कृत्वाथ सगरात् ।
अपासर्पद्धनुर्मात्रं शीघ्रं च प्रमदो मदम् । [205]
राक्षसं कालदंष्ट्रं तु वानरो ऋषभस्तदा ।
रुधिरेण तु दिग्धाङ्गं सधातुमिव पर्वतम् ।
अभिदुद्राव वेगेन पुनस्तत्र महागजम् ।
विषाणं तस्य निष्कृष्य ताडयामास राक्षसम् ।
गजदन्तहतः सोऽथ उत्तमाङ्गे निशाचरः । [210]
पिण्डीकृत्य पपाताथ गतसत्त्वो महीतले ।
वानरेण हतः सोऽपि स्वेन दन्तेन कुञ्जरः ।
निपपात महीपृष्ठे वज्राहत इवाचलः ।
हाहाकारमभूत्सर्वं तदा तद्राक्षसं बलम् ।
कालदंष्ट्रे हते वीरे दृष्ट्वा ह्यासन्वनौकसः । [215]

---

स्यौ. —(l. 135) Ts चले (for भले) —(l. 139) Ts स्वनतां (for स्वनता) —(l. 146) Ts वर्द्धैर (for कर्मार) —(l. 150) Ts तथा शरै (for तदाशुगैः) —(l. 151) Ts तथा (for सहसा) —Ts om. (hapl.) from पुंगवम् in l. 157 up to वानर in l. 158 —(l. 159) Ts मि (for स) and -मध्ये (for मध्य) —(l. 162) Ts तु त (for तत) —(l. 163) Ts चान्यैर् (for पश्चात्) —Note hiatus between the two halves of l. 164 —(l. 168) Ts निवार्य (for निपात्य) —(l. 172) Ts सत्वर —(l. 175) Ts भिन्न (for विद्धा) and द (for च) —(l. 176) Ts शरपातं (for °भूत) —(l. 179) Ts यतो (for गतो) —Note hiatus between the two halves of l. 180 —(l. 184) Ts समाकीर्ण —(l. 185) Ts -वृत्ता (for -वृता) —(l. 185) Ts वीरे (for काले) —(l. 188) Ts त्वरया (for सत्वर) —(l. 193) Ts त (for सा) —(l. 201) Ts चोदयामास —(l. 206) Ts तथा (for तदा). —Note hiatus between the two halves of l. 210 —(l. 211) Ts पिण्डीकृत्य —(l. 213) Ts

अथो यास्तु वधो वैति बुद्धिं कृत्वा प्लवंगमाः ।
शिखराणि प्रगृह्याशु शतमाय प्रचिक्षिपुः ।
तानि तैः संप्रयुक्तानि अन्तरिक्षे स्थितैः शरैः ।
शिखराणि द्रुतं छित्त्वा शङ्खशब्दमथाकरोत् ।
सहस्रेण पृथक्कार्णैः सद्विसहस्रकपीन् । [300]
एकैकेन तु बाणेन यूथपानमताडयत् ।
ततस्ते यूथपश्रेष्ठा भिद्यमाना शिलीमुखैः ।
आकर्णपूर्णनिर्मुक्तै राक्षसेन पुनः पुनः ।
आकाशं समुत्प्लुत्य समं सर्वेऽपतंस्तदा ।
रथे तस्य महाकाया यूथपा गिरिसंनिभाः । [305]
जघान स हयांस्तस्य गवाक्षोऽथ ध्वजं गजः ।
पनसश्च रथं तस्य विध्वंसयत वानरः ।
ऋषभः सारथिं तस्य आयुधानि पृथुस्तथा ।
वीरः शतबलिश्चैव मुष्टिनाभिजघान ह ।
शतमायस्ततः क्रुद्धः खड्गमादाय चर्म च । [310]
गरुत्मानिव वेगेन उत्पपात विहायसा ।
असिं शतबलिश्चापि प्रगृह्य प्रसभं बली ।
आकाशं खमवकाशमुत्पपात हरीश्वरः ।
तावुभावम्बरे यातौ तदा वानरराक्षसौ ।
खड्गपाणी सुसंक्रुद्धावन्योन्यमभिजघ्नतुः । [315]
खड्गेनाथाहरद्रक्षो वानरेन्द्रस्य वक्षसि ।
चर्मणा वञ्चयामास पतन्तमसिमुत्तमम् ।
वञ्चयित्वा प्रहारं तु वीरः शतबलिः पुनः ।
ऊरुमुद्दिश्य खड्गं तु ऊरुभ्यां प्राहिणोत्तदा ।
छिन्नोरुश्चाथशीर्षो वै चेष्टमानो यथोरगः । [320]
निपपात हतः सोऽथ गरुडेनेव पन्नगः ।
दृष्ट्वा तु शतमायं च गतासुं पतितं क्षितौ ।
प्रहृष्टा वानराः सर्वे विनेदुर्जलदा इव ।

Colophon

सचिवान्निहतान्दृष्ट्वा शतमायं च राक्षसम् ।
निःशेषं च बलं सर्वं कृतं दृष्ट्वा प्लवंगमैः । [325]
रोषसंरम्भताम्राक्षो भ्रात्रा सह कनीयसा ।
वानरानभिदुद्राव महाकायो महाबलः ।
धनुः शक्रधनुःप्रख्यं सज्यं वेगेन वै कृतम् ।
आदाय सहसा वीरो जगामाभिमुखः परान् ।
रथमास्थाय शक्रारिः सहस्रप्रमाणतः । [330]
छत्रेण ध्रियमाणेन मयूरेण ध्वजेन च ।
कवचेन विचित्रेण वीज्यमानश्च चामरैः ।
स्वश्वया परमया युक्तः सारथिं वाक्यमब्रवीत् ।

चोदयाश्वानसंभ्रान्तः समेषु विषमेषु च ।
वानरान्हन्तुमिच्छामि वेगेन राक्षस बलम् । [335]
पृथग्भूतां रणे सर्वे ततो रामं सलक्ष्मणम् ।
सुग्रीवं च हनिष्यामि हनूमन्तं च वानरम् ।
अप्रमत्तो महाश्वेषु सारथे वारणे तथा ।
मम रणे युध्यमानस्य रथे स्थास्य वीरभीः ।
प्रतिगृह्य तु तद्वाक्यं सारथिस्तस्य रक्षसः । [340]
सहस्रं वाजिनां शीघ्रं चोदयामास संयुगे ।
ततस्ते वानराः सर्वे शैलवृक्षशिलायुधाः ।
अभिपत्य च वेगेन महाकायं प्रदुद्रुवुः ।
राक्षसोऽथ महाकायः शरैस्तानप्ययोधयत् ।
चिच्छेद पर्वताग्राणि शिलावृक्षांस्तानि च । [345]
ततस्तु शरवर्षेण प्रच्छाद्य हरिवाहिनीम् ।
आकाशं छादयामास शरौघ्यैर्निशाचरः ।
दिशः प्रच्छादिता सर्वास्तमोभूता इवाभवन् ।
अन्धकारीकृतं सर्वं न प्राज्ञायत किंचन ।
धनुषो निष्पतन्तश्च शरा बर्हिणवाससः । [350]
रक्ताः पीताः सिताः श्वेता दह्यमाना प्रजा इव ।
आलात इव चाविद्धं धनुस्तस्य प्रकाशते ।
विद्युन्नादाकृतं यद्वद्द्वितीयेन्द्रधनुर्दिवि ।
सघर्षजश्च बाणानां शब्द आसीत्सुदारुणः ।
दह्यतामिव वेणूनामभवद्दारुणो महान् । [355]
पर्वतैः पतितैश्चैव तरुभिश्चैव चूर्णितैः ।
वानराणां शिरोभिश्च शरीरैश्चैव संयुगे ।
हस्तपादसमाकीर्णा नष्टवानरसंहता ।
क्षणेनाप्यवरूपा सा सबभौ युद्धमेदिनी ।
ततस्ते वानराः सर्वे बाणसंघातपीडिताः । [360]
न शक्नुवन्ति यत्र शकुना इव पञ्जरम् ।
हन्यमानाः शरौघैस्तैर्निष्पन्दास्तु तत्र स्थिताः ।
निरुच्छ्वासाः कृताः सर्वे शिलारूप्या यथा द्रुमाः ।
न तदाप्यङ्गुलमपि विवृतं समदृश्यत ।
निरन्तरीकृता बाणैः कदम्बा इव केसरैः । [365]
अशोकस्तबकाकारा रुधिरेण समुक्षिताः ।
निश्चेष्टाश्च कृताः सर्वे शाखिमृगतमैर्मुखैः ।
निश्चेष्टानागतांश्चाथ दृष्ट्वा सर्वान्प्लवंगमान् ।
अङ्गदो वानरश्रेष्ठो वानरान्वाक्यमब्रवीत् ।
न भेतव्यं न भेतव्यमेतस्य युधि रक्षसः । [370]
अहमेनं वधिष्यामि सत्यमेतद्ब्रवीमि वः ।
भवन्तः कृतकर्माणश्चिन्तयध्वं वानरोत्तमाः ।

Note hiatus between the two halves Ts तथा (for यदा) —Note hiatus between the two halves of l 298 —(l 304) Ts इवा (for तदा) —(l 306) Ts [आ]गे (for स) —(l 307) Ts स (for च) —(l 308) Note hiatus between the two halves Ts तदा (for वथा) —Note hiatus between the two halves of l 311 —(l 316) Ts अहरद् (for [अ]हरद्) —Note hiatus between the two halves of l 319 —(l 320) Ts छिन्नोरुस्तद् —(l 321) Ts [ऽ]पि (for ऽथ) Colophon — *Sarga no* Ts 58 Ts 59 —(l 331) Ts छिद्रेण (for छत्रेण) —(l 332) Ts च चित्रेण (for विचित्रेण) —(l 338) Ts रथाश्वु (for महाश्वेषु) and वारो (for वारणे) —(l 339) Ts रणे (for रथे) —Ts om l 349 355 —(l 358) Ts समारीर्णै —(l 359) Ts lacuna for सबभौ सा —(l 360) Ts संपिता (for पीडिता) —(l 361) Ts कुर्वे (for पञ्जरम्) —(l 372) Ts द्रुम (for स्थिता).

भागोऽवशिष्ट एकोऽस्य मम रक्षो महाबल ।
वानरानेवमुक्त्वा तु विधूयाङ्गानि तान्शरान् ।
अभ्यधावत वेगेन प्रगृह्य महतीं शिलाम् । [375]
राक्षसाय सुमोचाथ तां शिलां योजनायताम् ।
जल्पमानो हतोऽसीति महाकायरथं प्रति ।
आपतन्तीं शिलां दृष्ट्वा पातयामास पत्रिभि ।
त्रिभि शरैरसम्भ्रान्तो वानरं पञ्चभिर्भुजे ।
शिरस्त्राणं बाणेन दशसप्तभ कर्णिना । [380]
बिभेद च गात्रेषु स भृशं राक्षसर्षभ ।
स तदा भिन्नसर्वाङ्गो वालिपुत्र प्रतापवान् ।
पाणिना मुखमामृज्य शोणिताङ्कमथाङ्गद ।
वृक्षानुत्पाट्य तरसा द्रुमवृष्टिं ससर्ज ह ।
मुक्तामुक्तांस्ततस्तांस्तु शरैश्चिच्छेद राक्षस । [385]
छित्त्वा तु तानुत्पततो वृक्षानिन्द्र प्रलाविध्यत ।
नाराणां च सहस्रेण धनुर्मुक्तेन संयुगे ।
महानादश्चिभिदाणे परीप्सन्भ्रातरं रणे ।
अङ्गदस्तु तत क्रुद्धस्ततोऽपि महतीं शिलाम् ।
आमन्त्र्य सुमोचाशु महानादरथं प्रति । [390]
आपतन्तीं शिलां दृष्ट्वा गदां तस्यां सुमोच ह ।
गदया भग्नसाक्रुशा निपपात शिला भुवि ।
ततो रोषसमाविष्टो रथस्थस्य निपपात ह ।
अङ्गदो धनुराच्छिद्य बभञ्ज च महाबल ।
अदृष्ट्वा तस्य धनुश्छित्त्व केशान्संगृह्य राक्षसम् । [395]
क्षितावाक्षिप्य वेगेन क्षिप्रं प्राणैर्वियोजयत् ।
भ्रातरं निहतं दृष्ट्वा महाकायो महाबल ।
अङ्गदं ताडयामास वालिपुत्रं स्तनान्तरे ।
स तु तेन प्रहारेण मूर्छितो भ्रान्तचेतन ।
पपात सहसा भूमौ विसंज्ञो नेदनार्दित । [400]
अङ्गदं पतितं दृष्ट्वा वानरा सर्व एव ते ।
शिलापादपवर्षेण राक्षसं समवाकिरन् ।
छाद्यमानस्ततस्तैस्तु महाकायो निशाचर ।
अविध्यत ततो बाणैर्वानरानरसत्वरान्वित ।
गवाक्ष दशभिर्बाणै पृथु पञ्चभिरायसै । [405]
गज शरशतेनैव तथा शतबलिं त्रिभि ।
अशीत्या ऋषभं बाणैं पनसं सप्तभि शरै ।
सप्तत्या कथनं चैव मेघपुष्पं शतेन च ।
एवं स यूथपान्निरुद्ध्वा क्षिप्रहस्तो निशाचर ।
एकैकशश्च तान्सर्वान्प्रत्यविध्य प्लवगमान् । [410]
एतस्मिन्नन्तरे वीर प्राप्य संज्ञां हरीश्वर ।
अङ्गद पाणिना नेत्रे प्रमृज्य रुधिराप्लुत ।
आयसीं तु गदां गृह्य हयांस्तस्याहनद्बली ।
सहस्रं वाजिनां तस्य सारथिं च व्यपातयत् ।
गदया चाहनत्तु राक्षसं मूर्ध्नि सत्वरम् । [415]
स तु तं रथमुत्सृज्य हताश्वं हतसारथिम् ।
महाकायो गदां गृह्य वालिपुत्रमभिद्रवत् ।
ततस्तौ तु गदाहस्तावुभौ वानरराक्षसौ ।
आजघ्नतुस्तदान्योन्यं वीरव्रतमनुव्रतौ ।
राक्षसस्ताडयामास मूर्ध्नि वानरपुङ्गवम् । [420]
प्रास्फोटच्च तदा मूर्ध्नि प्रसुस्राव च शोणितम् ।
अङ्गदश्चापि तं रोषाद्राक्षसं चापि चाङ्गदम् ।
ताडयानौ ततस्तौ तु समं च समवापतु ।
ततस्तौ जर्जरीभूतौ पुष्पिताविव किंशुकौ ।
दन्ताभ्यामिव मातङ्गौ गदाभ्यां युध्यतो भृशम् । [425]
ते गदे शकलीभूते समुत्सृज्य प्रचक्रतु ।
बाहुयुद्धं महाघोरं बलिशक्रौ यथा पुरा ।
तयो पादाभिघाताच्च भस्मीभूतं रजोद्धतम् ।
प्रच्छादयन्तौ तं देशं ददृशाते तेन तेजसा ।
तौ पुन समसज्येतामायसैः पादघैरिव । [430]
अनुप्रहारै पततै शिरोभ्यां पादघट्टनै ।
पादप्रहारै करजै पाद्वीलै पुन पुन ।
हाहाकारमकुर्वन्त वानरा पार्श्वत स्थिता ।
वालिपुत्र महावीर्यं वालितुल्यपराक्रम ।
अपश्य शत्रुं दुर्धर्षं पिता ते दुन्दुभिं यथा । [435]
एवं संस्तूयमानस्तु बलेनाढ्यैर्वानरै तदा ।
तेनाशनिकल्पेन राक्षसं समवादयत् ।
पुनश्च समुत्क्षिप्य पातयामास भूतले ।
तस्योपरि समारुह्य पशुमारममारयत् ।
हते तस्मिन्महाकाये सिंहनादो महानभूत् । [440]
वानराणां प्रहृष्टानां साधु साध्विति वादिनाम् ।
हतशेषास्तु ये तत्र राक्षसा विप्रदुद्रुवु ।
लङ्कां प्रविविशुस्तूर्णं भयार्ता वानरार्दिता ।
वानरा स्वगतास्ते तु रामपार्श्वं समागमन् ।
शशंसुश्च तदा सर्वे महाकायं निपातितम् । [445]
सप्रामं च महद्वृत्तमङ्गदं च पौं सह ।
तच्छ्रुत्वा राघव प्रीतो वालिपुत्रं परिष्वजत् ।
सुग्रीवो वानराश्चान्ये हनूमाँल्लक्ष्मणस्तथा ।
विभीषणश्च संहृष्टो राघवं वाक्यमब्रवीत् ।
महाकाये हते राम रावणो निहतो ध्रुवम् । [450]
अङ्गदेन कृतं कर्म महद्राम न संशय ।

---

—(l 363) Ts निरतौ कृता —(l 371) Ts हनिष्यामि (for वधिष्यामि) —Note hiatus between the two halves of l 380 —(l 383) Ts शोणिताक्तम् —(l 385) Ts मुक्तान्मुक्तांस्त (for मुक्तमुक्तांस) —(l 386) Ts [अ]ति (for तु) and प्रत्युत्पत (for प्रत्यविध्यत) —(l 388) Ts पराभ्वन् (for परीप्सन्) —(l 393) Ts केशे (for केशान्) —(l 396) Ts वियोजयत् (for व्ययोजयत्) —(l 406) Ts शत (for शर ) —(l 409) Ts क्षिप्र (for निरुद्ध्वा) —(l 412) Ts प्रगृह्य (for प्रमृज्य) —(l 414) Ts व्यपोथयत् (for व्यपातयत्) —(l 415) Ts [अ]हरत् (for [अ]हनत्) —(l 418) Ts राक्षसवानरौ (by transp ) —(l 423) Ts समवापतु (for समवापतु ) —(l 425) Ts युध्यतौ भृश (moth eaten) —(l 429) Ts ददृशातां रजेन (for ददृशाते तेन) —(l 430) Ts सह पुनर्वेगात्, —(l 437) Ts तन्नाशनेन, —(l 444)

सहर्षेण तत्र जगाम रामः
  श्रुत्वा महाकायवधं महात्मा ।
तथा महाकायवधं महोग्रं
  ततोऽङ्गदं प्रीतमना ददर्श ।           [455]

Colophon

हतशेषास्ततो दिग्धाङ्गा राक्षसास्ते रणाजिरात् ।
प्रविश्य लङ्कां वेगेन रावणाय शशंसिरे ।
महाकायं हतं श्रुत्वा शतमायं च राक्षसम् ।
तथान्यान्निहतांश्श्रुत्वा महादैन्यमुपागमत् ।
शोकाविष्टश्चिरं ध्यात्वा दिशः समवलोक्य च । [460]
नेदमस्तीति संचिन्त्य अधोदृष्टिर्बभूव ह ।

## 28

After 911*, Ñ V (V3 missing up to l. 149, cf. v.l. 6 451) B2–4 D4.12.13 ins :

युद्धादन्यतम चैव न युक्तं समवैक्षत ।
वज्रदंष्ट्रं ततो वीरं व्यादिदेश महाबलः ।
शीघ्रं निर्याहि सहितो राक्षसैः सुमहाबलैः ।
हयै रथैस्तथा नागैर्बहुभिस्त्वमभिसंवृतः ।
हत्वा रामं सह भ्रात्रा सुग्रीवं च हरीश्वरम् ।      [5]
निवर्तस्व रणे वीर न हि तेऽस्ति समो युधि ।
क्रुद्धस्य युध्यमानस्य घोरान्विसृजतः शरान् ।
प्रमुखे नोत्सहेत्स्थातुं वज्रपाणिरपि स्वयम् ।
त्वत्कृतेऽत्र सहायेन मया देवाः पराजिताः ।
यमश्च निर्जितः सख्ये सर्वे व्याधिपुरस्कृतः ।      [10]
वज्रदंष्ट्रस्त्वेवमुक्तो राक्षसेन्द्रेण वीर्यवान् ।
कृत्वा प्रणामं संहृष्टः प्रत्युवाच दशाननम् ।
एष निर्यामि शत्रुघ्न तव शत्रुवधाय वै ।
सुखी त्वं भुङ्क्ष्व लोकांस्त्रीन्सीतां च निहतेश्वराम् ।
अद्य तौ नाशयिष्यामि मिथ्याप्रव्रजितौ रणे ।      [15]
शिवेन ध्याय मां राजन्नेष हन्मि रिपुं तव ।
ततस्तस्य बलाध्यक्षः समानीय महद्बलम् ।
सूतश्चाश्वरथं सज्जं तस्य शीघ्रमुपानयत् ।
आरोह ततो दिव्यं रथं हेमविभूषितम् ।
नानाप्रहरणाकीर्णं सचन्द्रमिव पर्वतम् ।      [20]
वानरैः सह संग्रामे युद्धकामस्य धीमतः ।
वज्रदंष्ट्रस्य वीरस्य शान्तिं चक्रुर्द्विजातयः ।
अथर्वाणं समुद्दिश्य मन्त्रमन्त्रप्रचोदिताः ।
रणप्रवेशसदृशीं कृत्वा वैजयिकीं क्रियाम् ।
ततः सर्वास्त्रविद्वांस समरेष्वनिवर्तिनः ।      [25]
विद्यावन्तसमायुक्ताः कृतस्वस्त्ययनक्रियाः ।
धनुर्हस्ताः कवचिनो वेगेनाप्लुत्य राक्षसाः ।
बान्धवान्सपरिष्वज्य निर्ययुः संयुगक्षमाः ।
तद्बलं प्रेक्ष्य निर्गच्छत्ब्राह्मणान्नाप्रचोदितम् ।
आस्थितः परमं दिव्यं रथं परमभास्वरम् ।      [30]
महायुधधरः श्रीमाञ्शुभवर्मधरः प्रभुः ।
शिरस्त्राणतनुत्राणी धन्वी परमदुर्जयः ।
स नील इव शैलेन्द्रो धर्मितः समभाषत ।

---

T1 समागमत् ( for समागमन् ). —( l. 446 ) T2 अगदस्य ( for बहुर च ). —( l. 452 ) T1 प्रहर्षेण चात्र Colophon. — *Sarga no* : T2 59, T3 60. —( l. 457 ) T3 [ आ ]शशंसिरे. —Note hiatus between the two halves of l. 461.

28

( l. 1 ) D12 निवर्तितु ( for अन्यतम ). D4 नैव ( for चैव ). Ñ1 V1.2 B2–4 समपेक्षत. D4 युद्धस्यसमवैक्षत ( for the post. half ). —( l. 2 ) Ñ2 B2 महावीर्यं ( B2 °र्यम् ) ( for ततो वीर ). B3 आदिदेश. Ñ2 B2 स रावण , B4 D13 महाबल ( for °बलः ). —( l. 3 ) D4 त्वं च ( for शीघ्र ). B3 सर्वैश्च ( for सहितो ). —( l. 4 ) V1 D4 [ अ ]4, V2 [ अ ]तु ( for [ अ ]भि ). —( l. 5 ) D13 स- ( for च ). Ñ2 B2 महाकपि ( for हरीश्वरम् ). —( l. 6 ) D13 सहैर्भिर्निरस्ताश्च ( for the post half ). —( l. 7 ) B4 बध्यमानस्य ( for युध्य° ) Ñ1 ससृजन —( l. 8 ) D4 प्रमुखे. D13 इव ( for अपि ) —( l. 9 ) D13 भजेयास ( for असकृत् ). —V2 om. l. 10–17. —( l. 10 ) D4.13 पुरःसर ( for पुरस्कृत ). —( l. 11 ) Ñ2 D4 च ( for तु ) —( l. 12 ) D4 कृतप्रणाम- ( for कृत्वा प्रणाम ). —( l. 14 ) V2 सुभद्र ( for सुखी त्व ). D4 युद्धे त्वं भुङ्क्ष्व लोकांश्च सवराश्च ससेविता —( l. 15 ) B2.4 निहनिष्यामि, D13 मारयिष्यामि ( for नाशयिष्यामि ) V2 प्रव्रजितौ. Ñ1 V1.2 B4 वने ( for रणे ). —B4 om. l. 16. —( l. 16 ) Ñ1 ध्यायेथा, V1 ध्याहि मां. D4 स्वामिन् ( for राजन् ) D13 शिव ते ध्यायमानेह ( for the prior half ). V1.2 अथ हन्मि, D4 यत्नेन हन्मि ( hypm ). D13 हनिष्यामि ( for एष हन्मि ). Ñ1 रिपून्. —( l. 17 ) B4 महत्सैन्य ( for बलाध्यक्ष ) D4 बलाद ( for महद् ). —( l. 18 ) V2 व्यूह ( for सज्ज ). Ñ1 साश्व, V1 चाश्व; V2 B3 माश्व , B2 चास्य ( for चाश्व ). V1 दिव्य सज्ज ( for सज्ज and तस्य ). B4 om. शीघ्रम्. —( l. 19 ) D4 रथ ( for ततो ). —( l. 20 ) V1.2 तोयद ( for पर्वतम् ). —( l. 21 ) B4 D13 युध्यमानस्य ( for युद्धकामस्य ). —( l. 22 ) B3 प्रयाणे तस्य ( for वज्रदंष्ट्रस्य ). —( l. 23 ) D4.13 अथ वा त ( for अथर्वाण ). B3 समुद्दीक्ष्य D13 समन्त्र ( for मन्त्रम ) B4 D13 चोदिता. D4 मन्त्रसंस्कृतनोदिता ( for the post half ) —( l. 24 ) V2 B2.3 वन ( for रण ) D13 प्रदेश ( for प्रवेश ) D4 रणे प्रचेत सदृशीं ( for the prior half ) B2 ते वैदिकीं, D13 वैजयिकां ( for वैजयिकीं ). D4 क्रमशः ( for क्रियाम् ) —( l. 25 ) D4 विहीर ( for विद्वांस ) D13 [ अ ]निवर्तिनः ( for [ अ ]निवर्तिन ). —( l. 26 ) Ñ2 B2 दिव्य ( for विद्या ) —( l. 27 ) D4 वेगम् ( for वेगेन ) B4 D13 ( आ )क्रम्य, D4 ( उ )त्पत्य ( for [ आ ]प्लुत्य ). —( l. 28 ) Ñ2 अन्योन्य ( for बान्धवान ) Ñ1 V1.2 सपरिष्वज्य. Ñ2 सयुगक्रिया , V1 B2.4 °क्रिया , V2 समरेच्छया, D13 संगरक्रिया ( for संयुगक्षमा ). —( l. 29 ) B3 निर्यान्त ( for निर्गच्छत् ). Ñ2 B2 D4 -प्रचो( D4 °णो )दित ; B3 D13 प्रदेशिन ( for प्रचोदितम् ) —( l. 30 ) Ñ1 V1 परमदारुण ( for परमभास्वरम् ). —( l. 31 ) B3 रथ ( for first धर ) Ñ1 V1 शुभवर्म-; B2.3 शुभकर्म- ( for °वर्म ). —( l. 33 ) B2.3 वर्मित ; B4 सायुत.

सिंहशार्दूलदर्पाश्च हयास्ते किङ्किणीचिता ।
तस्य रामभवीरस्य चतुरश्च रथोत्तमम् । [35]
कुक्षिपक्षगताश्चार्थे हया परमदुर्जया ।
सहस्रद्व सहस्र च नक्षत्राव त एव च ।
मध्य व्यूहराथस्तु तत्रस्थो महाबल ।
धनुश्चस्फालयन्घोर ननाद प्रजहास च ।
धनु नागसहस्राणि र थयानां महात्मनाम् । [40]
नानाप्रहरणाना च वध्नुवन्नथ संयुगे ।
गदाभि परिघै शूलै पट्टिशै कूटमुद्गर ।
प्रगृहीतव्याराश्च राक्षसा पर्वता इव ।
अथ तौ विनद तत्र क्रोशन्तौ च राक्षसा ।
ततो युद्धाय सज्जेषु समरस्वनिवर्तिन । [45]
तत्र तूर्यसहस्राणा स शब्दो निनदो महान् ।
हयानां च गजानां च गर्जतामतिवेगिनाम् ।
स तु दुन्दुभिनिर्घोष घन स्तनितनिस्वनम् ।
शुश्रुवे शङ्खशब्दश्च राघवे सुमहीतले ।
तत्र शङ्खनिनादेन भेरीतूर्यरवेण च । [50]
हयाना च विनादेन कुञ्जराणा तनितस्वनम् ।
सागरप्रतिमोपेन पतन मह्या नृत ।
वज्रदर्पोऽतिसन्नद्धो विमदौ कार्मुकोद्यत ।
तस्य निष्पततो वेगाद्युद्धार्थं युद्धकाङ्क्षिण ।
हया निपतिताश्चास्य गहद्धाश्चानवान्तर । [55]
अन्तरिक्षे ततश्चोल्का वायुश्च परुषो ववौ ।
वमन्ति स्म शिखिज्वाला शिवा घोराश्च पश्यत ।
उत्पातास्ताऩ्महावीरो प्रहस्य युधि दुर्जय ।
उवाच वचन धीमांस्तु कालशनमुत्तमम् ।
अद्याह दर्शयिष्यामि स्वबाहुबलमूर्जितम् । [60]
*अद्य सद्भ्यानिहताररमन्द्रक्ष्यथ वनौकस ।*
बान्धवा निहता येषा हरिभिरत्र संयुगे ।
अद्य त निधयिष्यन्ति शत्रुमासन राक्षसा ।
हृदयाद समुद्भूत रन समरमूर्धनि ।
अद्य वै नाशयिष्यामि दस्युशोणितविग्रहे । [65]
हत्वा समाप्त मोद च लब्ध्वा वै राघवाद्भयम् ।
अद्याह निहनिष्यामि स्वबाहुबलमाश्रित ।
कालमिन्द्र कुबेर च वरुण समरुद्गणम् ।
तोषयिष्यामि राजान रावण विक्रमे स्वके ।
यावत सकला हत्वा सुग्रीव च हरीश्वरम् । [70]
मानुषौ भक्षयिष्यामि राक्षसौ शत्रुरक्षसा ।
अथवा सर्वे मे बाणा सर्वे प्राणविनिपाता ।
ख्यातु मम पुरा चाका क्व रण जीवितार्थिन ।
इत्वा रिपुगण सर्वे पुनरेष्यामहं पुरीम् ।
दृश्यस्य रिपवो नास्य नास्ति युद्धसमा गति । [75]
भवन्त पूजन कृत्वा मम राक्षससत्तमा ।
निहत्यैतान्दरी सर्वामोदन्ता सुखिता इव ।

(for वरिते ) D6 चर्मर परिवारित D4 चामैर सन्नभाग (for the post half —(l 34) D15 हृष्टा वे (for दर्पाश्च) V1 2 वाजिन D12 हृष्टा वै (for हयास्ते) V2 किङ्किणी युता —(l 35) N1 B3 D5 राघव (for वीरस्य) N1 मधुर् V3 B1 2 D4 (with hiatus) कुरु (for चतुर) V3 अश्च (for अथ) N2 वस्तुरन्ने रथोत्तमे B4 जान्तुरन्ने तथापर (for the post half) —V3 om l 36-38 —(l 36) N2 स्वग्रपक्ष B3 पैनिराश्च B1 D5 कुक्षिपक्षि (for कुक्षिराग) —(l 37) D12 सत्त तु (for °से च) B3 सप्तभिर्दि सप्तस्त्रग D4 सप्तदिक्षिप्ते च (for the prior half) —(l 38) N2 V1 व्यूहे N2 B1 2 मध्य N1 °ध्ये) पृष्ठोऽरक्षस्तु (B4 °ध्व) D5 मध्ये दुहे रथसत्य (for the prior half) —(l 39) N2 स धनु (for धनुर्वे) N1 D4 विस्फारयद् B1 2 ह (for च) —(l 40) D4 सह (for नत ) —(l 41) N2 B3 तत्र (for तत) —(l 43) B2 प्रगृहीता —(l 44) D4 न तत् (for क्रोशन्तौ) V1 वानरा (for राक्षसा) —(l 46) B2 D 2 तस्य (for तत्र) —(l 47) D4 धावाना (for गजाना) N1 V1 B2 तन्नाम् V2 न ताम् (for गर्जताम्) B3 4 न तां प्रति (B4 °तामसि )नावन D5 नन्नापमनेतिना D12 वेगतानां च वेगिनां (for the post half) —V3 om l 48 —(l 48) N2 च (for तु) N1 V1 B3 निर्घोषे —(l 49) B4 शुश्राव (for शुश्रुवे) V3 D2 शृण्वन्तु B3 गर्जेश्च (for शब्दश्च) V3 सुदीरित B4 च सभी D4 च सस्तन D12 स्वनवी° (for सुमहीतले) —(l 50) V3 भेरि (for भेरी) —(l 51) B4 कुञ्जरे च D2 कुञ्जरेण च B1 D4 नभस्थल (for °स्तनम्) —(l 53) N2 [s]पि से V1 भुग V3 B4 D12 [s]पि से (for दर्पश्च) D12 प्रथमो D5 चोदित, D12 °दित (for °दित) —(l 54) V2 दैत्य D12 युद्धे (for युद्धाय) —(l 55) N2 D4 तस्य V2 भुवो (for वास्य) —(l 56) N V1 2 B1 2 D4 अंतरीक्षात् —V3 om l 57 —(l 58) D12 तु (for तान्) B3 चन्दिनात् (for प्रहस्य) —(l 59) V3 नदश्चोत्तमम् (for तं काश्चनम्) —B3 om l 60 —(l 60) N2 V1 2 दुत्वाहं D4 प्रत्यहं N2 (wrongly) ओक्षिद्ध (for ऊर्जितम्) —(l 61) D12 द्रक्ष्यसि (for द्रक्ष्यथ) —(l 62) D4 तेषा (for येषां) N2 D4 वे तु V1 2 बाण (for अत्र) B3 सयुता (for संयुगे) —(l 63) N2 अथ तानि वौद्धिष्यामि D4 अथ तेन बोधिष्यति, D12 अथ निवेदयिष्यामि (for the prior half) B4 दर्शिता (for राक्षसा) —(l 64) D4 अहिम् (for द्द म्) B4 अद्य यत् (for अद्य) —(l 65) B3 अद्य (for अह) N2 नाशयिष्यामि (for शम°) V3 D2 निहतैः (for निहते) —(l 66) D4 प्रहृष्टा अभिनोदस्व (for the prior half) B4 D4 सलक्ष्मणा (for °पत्र रा च) —(l 67) B4 अद्याह B3 D12 दर्शयिष्यामि (for निहनि°) N1 V1 हत्वाहं B4 बलतूनित D4 °विक्रम (for °माश्रित) V3 वानरा स्तै म स्थितान् (for the post half) —(l 68) V3 D12 मित्र (for इन्द्र) —(l 69) N2 राजेन्द्र V3 वा रम्य (for राजान) D4 मित्र (for स्वके) —(l 70) N2 B2 महाकपि (for हरीश्वरम्) —(l 71) B3 D12 रामलक्ष्मणौ (for शत्रुरक्षसौ) —(l 72) D4 (with hiatus) आशीविषोपमा —(l 73) V3 निजमार्ग (for जीविता°) —(l 74) V3 B3 रिपुगण D12 सर्व (for सर्वे) D4 इत्वारिगण स ये च (for the prior half) D4 यास्यामि (for एष्यामि) —D4 om l 75 77 —(l 76) D12 पुण्य (for सत्तमा ) —D2 om l 77 —(l 77) V1 2 B4 तान् (for [प]तान्) N2 परान् (for हरीन्)

Colophon

वज्रदंष्ट्रं तु निर्यान्तं राक्षसैर्बहुभिर्वृतम् ।
गर्जन्तं समहाकाय भीमं भीमपराक्रमम् ।
ददर्श महती सेना सुग्रीवेणाभिपालिता ।   [80]
अभिसंजातहर्षाणां वानरैर्युद्धमिच्छताम् ।
आपतन्तं महानीकं राक्षसानां तरस्विनाम् ।
प्रत्युद्ययुः शिलाहस्ता वानरा जितकाशिनः ।
प्रविश्य ध्वजिनीं क्षिप्रं घातयामासु राक्षसान् ।
राक्षसाश्चापि संक्रुद्धा निजघ्नुर्वानरान्रणे ।   [85]
सर्वे रुधिरदिग्धाङ्गा राक्षसैर्जनितव्रणाः ।
वज्रदंष्ट्रबले सर्वे निर्जघ्नुर्वनौकसः ।
ततो मुमोच बाणौघान्वज्रदंष्ट्रो रणे स्थितः ।
ददाह च रणे क्रुद्धो वानरान्सह यूथपैः ।
स सायकमयैर्जालैः सूदयामास तां चमूम् ।   [90]
उद्धूतमिव वातेन महदभ्रमहाचयम् ।
समुध्यमाणो निधनं स्वस्य सैन्यस्य राक्षसः ।
चकार कदनं घोरं धनुष्पाणिरवस्थितः ।
आवर्ते इव संजज्ञे बलस्य महतो महान् ।
क्षुभितस्य यथा सिन्धोर्मथ्यमानस्य संप्लवः ।   [95]
वलीमुखशरीरैश्च ऋक्षाणां चैव मेदिनी ।
बभूव निचिता घोरैः पर्वतैरिव सर्वतः ।
हतवीरौघवप्रान्ता भग्नायुधमहाद्रुमा ।
शोणितौघमहातोया यमसागरगामिनी ।
असृग्घनमहापङ्का नानाकीर्णाश्मशैवला ।   [100]
छिन्नकायशिरोमीना अङ्गावयवशाद्वला ।
गृध्रकाकसमाकीर्णा कङ्कहंससमसेविता ।
मेदोमज्जास्थिसंकीर्णा आर्तस्तनितनिस्वना ।
वज्रदंष्ट्रशरोद्भूता ऋक्षवानरसंभवा ।
प्रावर्तत नदी घोरा भीरूणां भयवर्धिनी ।   [105]
तत्समीक्ष्य बलं सर्वं राक्षसेन निपातितम् ।
द्रवतो वानरान्सर्वांस्त्रासात्क्रमतोऽपि च ।
सहस्रांशुसुतः क्रुद्ध उत्पपात महाबलः ।

---

Colophon: D3 om. —*Kāṇḍa name*: Ñ V1.2 B1-4 D4 युद्धकाण्डे. —*Sarga name*: Ñ V1.2 B1-4 D4 वज्रदंष्ट्रनिर्या(V3 °प्रया)ण. —*Sarga no.* (figures, words or both): Ñ1 V3 B2 D4 om.; Ñ2 31; V1 32; B3 29; B4 33. —(l. 78) D4 च (for तु). —(l. 79) D4 आयान्. V3 तु महाकाय; D4 सुमहावीर्यं (for सुमहाकाय). —After l. 79, B3 ins.:

1* वानरा ददृशुस्तं ते कालमेघमिवागतम् ।

—(l. 80) Ñ2 B3 D4 [अ]तु- (for [अ]भि). V3 corrupt (for the post. half). —(l. 81) D4 उप- (for अभि-). V1.2 B2.3 D13 रक्षोभिर् (for वानरैर्). B3 योद्धुम् (for युद्धम्). V1 इच्छती. D4 युद्धकाङ्क्षिणां. Ñ2 वानराणां जयैषिणां (for the post. half). —(l. 82) D13 आगत त. D4 महासैन्य (for °नीकं). B3 यशस्विनां (for तर°). —D4 om. l. 83-84. —(l. 83) V3 D13 प्रत्युद्ययुः (for प्रत्युद्ययु). B4 बलेन (for वानरा). —(l. 84) D13 पतिता° (for ध्वजिनीं). V1 B3 शीघ्र (for क्षिप्र). V3 प्रविश्य राक्षसीं सेनां (for the prior half). Ñ2 V3 D13 घातयामास, V3 जघ्नुः समरे, B4 पातयामासु (for घातयामासु). —(l. 85) B3 वानरास् (for राक्षसास्). B3 चापि- (for चापि). D4 निर्जघ्नु. —(l. 86) V3 त्रिजित- (for जनित-). —(l. 87) D13 तत्र (for सर्वे). —(l. 88) V3 illeg. for बाणौघान्. V3 B4 D4 रथे स्थितः; D13 महाबल° (for रणे स्थितः). —V3 om. l. 90. —(l. 90) D4 अर्दयामास (for सूदया°). —(l. 91) V3 उद्धूतश्च वातेन महाभ्रचयोपमम्. —(l. 92) D4 विमूढमाणो. —B3 om. from the post. half of l. 92 up to the prior half of l. 95. B4 D13 सर्वसैन्यस्य च (B4 स) (for स्वस्य सैन्यस्य). —D4 reads l. 94 after l. 88. —(l. 95) V3 D4 महासिन्धोर्. —For l. 96-105, cf. 6.46.23-27. —(l. 96) V3 वलीमुखैः शरीरैश्च (for the prior half). V3 रक्षसां (for ऋक्षाणां). D13 राक्षसानां च मेदमा (for the post. half). —V3 illeg. for l. 97. —(l. 97) D4 निहता (for निचिता). —B1 D3 read accusative in place of nominative in l. 98-105. —(l. 98) D13 -समाप्ता (for -वप्रान्ता). V3 ***रौघसमाता, D4 हतवीरैः सुसंच्छन्ना (for the prior half). B3 -[आ]युध-; B4 -स्कन्ध-; D13 ध्वज- (for -[आ]युध-). V1.2 भग्नद्रुममहाशया (for the post. half). —(l. 99) D13 शोणितौघा. —(l. 100) Ñ1 V1 B3 असृक्कर्दम; Ñ2 illeg.; B4 सत्कर्दम-; D4 वपावसा- (for असृग्घन-). V3 B3 महापङ्का. Ñ2 B3 -केशार्त; B4 D4 -वर्णाश्म- (for -कीर्णाश्म-). V3 नानामत्तककच्छपा (for the post. half). —(l. 101) Note hiatus between the two halves. D4 -शिरोग्रीवा (for °मीना). V3 सायकवी गुल्माग (for the prior half). V3 महावयव-; D13 बहावयव-. Ñ2 V1.2 B2.4 D13 -शर्करा (B3 D13 °रा) (for शाद्वला). D4 रक्तावर्तमहावरा. (for the post. half). —(l. 102) V1.2 D4 गृध्रगोमायुसंकीर्णा (D4 °युक्ता च) (for the prior half). Ñ2 °ष्ठ; D4 काक- (for कङ्क-). V1.2 B3 D13 -वायस- (for सारस). —(l. 103) Note hiatus between the two halves. Ñ1 V1.2 B3 [अ]वपाकीर्णा; B4 -[अ]स्थ्युपाचीर्णाम्, D4 -[उ]च्छ्वास°, D13 -वसाकीर्णाम् (for -[अ]स्थिसंकीर्णा). V3 तत (for आर्त). B4 नादिनी (for -निस्वना). D3 ता आवर्तितनिस्वना (D13 °ना) (for the post. half). —(l. 104) B2.3 शरोद्भूता (for -शरोद्भूता). B3 सेविता (for संभवा). —(l. 105) B3 आवर्तते, B4 D13 आवर्तयन्. Ñ2 B3 दारुणा (for भीरूणां). —(l. 106) V3 राक्षसेन्द्रेण पातितं (for the post. half). D4 तां समीक्ष्य विद्रावितां वानरं ते निपातितं. —(l. 107) V3 दृष्ट्वा (for द्रवतो). V3 भ्रमतो (for क्रमतो). B4 वा (for च). D4 राक्षसान्वानरान्; D13 क्रमतो राक्षसानपि (for the post. half). —(l. 108) V3 सहस्रांशुसुतः. —(l. 109)

अभ्यद्रवच्च वेगेन राक्षसं जितकाशिनम् ।
स विनद्य महानादं त्रैलोक्यमभिनादयन् । [110]
जनयन्निव निर्ह्रादान्विधमन्निव पर्वतान् ।
प्रेक्ष्य पिङ्गाक्षमायान्तं राक्षसा विप्रदुद्रुवुः ।
तांस्तु विद्रवतो दृष्ट्वा राक्षसांस्त्रासमानसान् ।
स धनुर्धन्विनां श्रेष्ठो विकम्प्य रणमूर्धनि ।
ववर्ष शरवर्षेण सुग्रीवं प्रति वीर्यवान् । [115]
शोणितः शरवर्षेण बलेन महता तदा ।
जिजघान द्रुमान्क्रोधात्सुग्रीवो वानराधिपः ।
प्रवृद्धशाखाविटपं तरुणाङ्कुरपल्लवम् ।
समूलमुत्पाट्य बली स्कन्धवन्तं सुपुष्पितम् ।
तमिन्द्रचापप्रतिमं सारवन्तं महाद्रुमम् । [120]
उत्पाट्य कुपितस्तस्मै शालं बलसमन्वितः ।
राक्षसं तं समुद्दिश्य प्रेषयामास वानरः ।
तमापतन्तं शतधा स चिच्छेद शिलीमुखैः ।
तस्य दृष्ट्वा महाघोरं कर्म सर्वेऽथ राक्षसाः ।
सिंहनादं नदन्ति स्म वज्रदंष्ट्रप्रहर्षणम् । [125]
ततः सपर्तिगृह्यासौ वीरः सुमहतीं शिलाम् ।
क्रोधाद्द्विगुणरक्ताक्षः पितुस्तुल्यपराक्रमः ।
तां शिलां पातयामास राक्षसस्य रथं प्रति ।
आपतन्तीं शिलां दृष्ट्वा गदामुद्यम्य संभ्रमात् ।
रथादाप्लुत्य वेगेन वसुधायां व्यतिष्ठत । [130]
प्रसह्य च रथं तस्य निपपात शिला भुवि ।
सचक्रकूबरधुरं साश्वध्वजं सतारासनम् ।
भङ्क्त्वा तु स रथं तस्य सुग्रीवः प्लवगेश्वरः ।
रक्षसां कदनं चक्रे सस्कन्धविटपैर्द्रुमैः ।
ते छिन्नशिरसो भग्ना राक्षसाः शोणितोक्षिताः । [135]
द्रुमैः प्रमथिताश्चान्ये निपेतुर्धरणीतले ।
विद्राव्य राक्षसानीकं विनदन्भैरवं स्वनम् ।
गिरिशृङ्गमथादाय तद्रक्षः समुपाद्रवत् ।
तमापतन्तं वेगेन गदामुद्यम्य वीर्यवान् ।
विनदन्नर्दयामास वानरेन्द्रं महाबलम् । [140]
तस्य क्रुद्धस्य रोषेण गदां तां बहुकण्टकाम् ।
न्यपातयत सुग्रीवे सा गदा शतधा गता ।
स हरिः क्रोधताम्राक्षस्तं प्रहारमचिन्तयन् ।
राक्षसस्योपरि महद्गिरिशृङ्गमपातयत् ।
स विह्वलितसर्वाङ्गो गिरिशृङ्गाभिताडितः । [145]
पपात सहसा भूमौ विशीर्ण इव पर्वतः ।
सुस्राव चास्य गात्रेभ्यः फेनिलं रुधिरं बहु ।
ततस्ते राक्षसा दृष्ट्वा वज्रदंष्ट्रं निपातितम् ।
विविशुर्नगरीं लङ्कां वध्यमाना वलीमुखैः ।
विमुक्तकेशाः क्षतजोक्षिताङ्गाः [150]
शिलातलैर्भिन्नविशस्त्रवाहनाः ।

V1.2 B1 अभ्यद्रवन्. D4 राक्षसाञ्जितकाशिनः (for the post. half).—(l. 110) V2 अपि नादयन्; B2 अभिनर्दयन्.—(l. 111) Ñ2 निर्ह्रादं. D4 जयन्निव हृदा-सर्वान् (for the prior half). B2 विनदन्; D4 वर्धयन् (for विधमन्).—(l. 113) Ñ1 वै द्रवतो. D4 तत्र वानराः; D14 तु महाबलान् (for त्रस्तमानसान्).—(l. 114) V1 विस्फार्य (for विकम्प्य). V2 मख- (for रण-).—(l. 115) D13 -वर्षाणि. V3 विससर्ज महद्बाणान् (for the prior half). B3 रणमूर्धनि (for प्रति वीर्यवान्).—(l. 116) Ñ2 V1 D13 तलेन; V2 मतेन (for बलेन).—(l. 117) V3 महाक्रोधात् (for द्रुमान्क्रो°).—(l. 118) V3 -वर्धेत (for -पल्लवम्). V1 तरुण बहुपत्रकं (for the post. half).—(l. 119) D4 समूलमुत्पाटयामास (hypm.) (for the prior half) and सपुष्पितं (for सुपुष्पितम्).—(l. 120) D14 महाबलं (for °द्रुमम्).—(l. 121) V2.3 D14 तस्यै (for तस्मै). Ñ1 V3 शालमूल-; D14 पितुर्बल- (for शालं बल-).—(l. 122) B1 D14 तं (D13 तु) समुद्दिश्य.—(l. 123) V1 सहसा; D4 च तथा; D14 च तदा (for शतधा).—After the prior half of l. 124, D4 reads erroneously from the post. half of l. 122 up to l. 123.—D4 om. the post. half of l. 124.—(l. 125) V3 D14 वज्रदंष्ट्रं प्रहर्षयन् (for the post. half).—(l. 126) V3 D4 संप्र- (subm.) (for सपरि-).—(l. 127) Ñ2 B4 -ताम्राक्षः; V3 -वक्त्राक्षः (for -रक्ताक्षः). D4 पितृतुल्य-.—V3 om. l. 128.—(l. 128) D4 बलैः (for शिलां). V1 रथोपरि (for रथं प्रति).—(l. 129) D4 आयान्तीं तां; D14 चालयन्तीं (for आपतन्तीं). D14 वेगवान् (for संभ्रमात्).—(l. 130) B3 D14 व्यवस्थितः (for व्यतिष्ठत).—(l. 131) Ñ1 V2 B3 स प्रसह्य; B4 D14 प्रदह्य तं; D4 प्रसह्यमाने (hypm.).—(l. 132) B3 स रङ्ग-. Ñ2 -कूबरवं; V2 °ध्वजं; V3 B2-4 D4 °रथं; D14 °युगं (for °धुर).—(l. 133) Ñ2 स भंक्त्वा तु (by transp.); B4 D14 भंक्त्वा तु तद्. B4 प्लवगाधिपः (for °गेश्वरः).—(l. 134) V3 समुद्र (for सस्कन्ध-). D13 शक्तिशूलपरश्वधैः (for the post. half).—(l. 135) Ñ1 V1 तच्छिन्न-; Ñ2 विशीर्णा-; D4 विच्छिन्न- (for ते छिन्न-).—(l. 136) D4 संताडिताश्च (for प्रमथि°).—(l. 137) B4 निपात्य; D14 निर्जित्य (for विद्राव्य). Ñ1 V1 B3 विनदन् (for विनदन्). B2 वर (meta.) (for स्वरम्). V3 corrupt; D4 विननाद हरिः पुनः (for the post. half).—(l. 139) V3 om. (hapl.) from the post. half up to the prior half of l. 141. V1 B2.4 वेगवान् (for वीर्यवान्).—(l. 140) Ñ B4 विनदन्. D4 ताडयामास; D14 [त]र्दया° (for अर्दया°). B4 राक्षसेंद्रं (for वानरेन्द्रं).—(l. 141) D14 वेगेन (for रोषेण). Ñ1 B3 D4 ततः क्रुद्धः स रोषेण; V1 स च क्रुद्धस्तु वेगेन (for the prior half). V3 D4 वज्र- (for बहु-).—(l. 142) D4 कृता (for गता).—(l. 143) D4 कपिः (for हरिः). D13 तस्य सुग्रीव (for क्रोधताम्राक्ष). D4 संचचार (for तं प्रहा°).—(l. 144) V1 D4.13 महान्. B4 -गिरेर्शृंगाणि (for °शृङ्गम्). D13 न्यपातयत्.—(l. 145) B4 विह्वलित- (for विह्व°).—(l. 146) B3 विशीर्णो; D4 भिन्नाङ्ग (hypm.) (for विशीर्ण).—(l. 147) Ñ2 V2 स्रोतोभ्यः; V3 B4 D4 गात्रेषु (for गात्रेभ्यः). B3 शोणितं (for फेनिल).—(l. 149) Ñ1

रक्षोभिरुद्धोद्धतकण्ठवक्त्रः
शशंसिरे मुदितवज्रदंष्ट्रम् ।

Colophon

वज्रदंष्ट्रं हतं श्रुत्वा रावणो राक्षसाधिपः ।
किंचिद्दीनमनाश्चिन्त्यां प्रतिपेदे स राक्षसः । [155]
स विधर्याय मुहूर्तं तु मन्त्रिभिः सह राक्षसैः ।
वेश्मनः समतिक्रम्य क्रोधादुष्णं विनिःश्वसन् ।
ततः स रावणः सर्वैः सचिवैः राक्षसाधिपः ।

## 29

After 6.46.47, B3 ( marg. ) ins.:

प्रहस्तं निहतं दृष्ट्वा प्रजङ्घो नाम राक्षसः ।
गजेन्द्रमप्रतो नीलमाससाद परंतपः ।
आपतन्तं गजं नीलो वेगेन नगसंनिभम् ।
सोऽश्वकर्णं समुत्पाट्य जघानाशु महागजम् ।
गजं च पादरक्षं तु तेन राक्षसं वानरः । [5]
निजघान स संक्रुद्धान्वानरतुरिवासुरान् ।
तं गजं पतितं दृष्ट्वा प्रजङ्घो कुपितः स्वयम् ।
नीलमासाद्य वेगेन शूलेनैव जघान सः ।
स * शूलेनाभिहतो महावेगोऽनलात्मजः ।
तेनैव हतनागेन प्रजङ्घमवध( °हनत् )स्वयम् । [10]
प्रजङ्घे निहते वीरे सतघ्नो नाम राक्षसः ।
प्रहस्तवधसंतप्तो युद्धायैव न्यवर्तत ।
पट्टिशं सुमहद्घोरं रक्तमाल्यानुलेपनम् ।
रौद्रं रौद्रं समादाय बहुशत्रुभयावहम् ।
तस्य पट्टिशमाक्षिप्य द्विविदो बलदर्पितः । [15]
तमेवाभ्यहनद्वीरः पशुं खड्गगतं यथा ।
द्विशागजसम ** सुप्रतिकाञ्जनोपमम् ।
जगाम गज *** (illeg.) वेगेन कालकामुखः ।
तेनापतन्तं संवीक्ष्य गजमैरावणोपमम् ।
जाम्बवानभिदुद्राव वार्यमाणः शरोर्मिभिः । [20]
गजाङ्कुशं समाक्षिप्य *** देवासुर * ।
कालकामुखमाक्रम्य निजघानास्य मूर्धनि ।
तं निमतंमहा ******** स्थितम् ।
अभिदुद्राव वेगेन जाम्बवान्वानरर्षभः ।
सहस्राक्षसमो युद्धे जाम्बवन्तं महाबलम् । [25]
वृकाख्यो मोहयामास माकाशनिसमैः शरैः ।
विजयन्तं समालोक्य हुताशनसमः कपिः ।
तद्रथं सहसा क्षिप्रं ** मावेशयत्प्रभः ।
स ताल इव चाविद्धः स रराज महाबलः ।
वृकाख्यस्तुद्गतबलः पपात गतजीवितः । [30]
हर्षितं क्षिप्रमुत्पत्य हरीशाय शरं दात्तम् ।
पतन्तं रथमाक्षिप्य क्रीडन्ति स्म तदा युधि ।
वृकाख्यं निक्षिपन्त्यन्ये रथमन्ये प्लवंगमाः ।
******नैव केचित्तां * प्लवंगमाः ।
सर्वतश्चूर्णितैर्गात्रैः सर्वशो रक्षसां भयम् । [35]
पपात हरिभिर्मुक्तं प्रविष्टं वानरालयम् ।
नीलेन तु कृतं कर्म तद्दृष्ट्वा प्लवगोत्तमाः ।
प्रविश्य * द्रुतं सहसा निजघ्नुर्नाविशाचरान् ।

## 30

After 951*, Ñ2 V B1( after first occurrence ).2-4 D2.4.9 T2 cont.; D1 ins. after an addl. colophon appearing after 6.47.7 ( first occurence ); while D13 ins. after 6.47.7 ( first occurrence ); whereas T3 ins. after 6.47.6:

संग्राममभिकाङ्क्षन्तं रावणं श्रुत्य भाविनी ।
तदोत्थाय ययौ देवी नाम्ना मन्दोदरी शुभा ।
माल्यवन्तं करे गृह्य यूपाक्षसहिता तु सा ।
मन्त्रिभिर्मघवत्त्वक्षीक्षपाल्यैर्मन्त्रिसत्तमैः ।
राक्षसैरावृता सर्वैर्वज्रहस्तपाणिभिः । [5]
योषिद्भिश्चैव वृद्धाभिस्तथा कन्याभिरावृता ।
आयुधव्यग्रहस्तैश्च राक्षसैश्च समन्ततः ।
सभां तु प्रस्थिता देवी यत्रास्ते राक्षसाधिपः ।

V1 हन्यमाना; V3 corrupt ( for वध्यमाना ). —( l. 150) V3 धनवचिताश्चः ( for °जोक्षिताक्षः ). —( l. 151 ) Ñ भिन्नभिन्नस्त- ( Ñ2 °रुत्त )वाहवः ; V1.2 भि( V3 छि )न्नविक्षतवाहनाः ; V3 भिन्न- विक्षतवाहनाः ; B3 भिन्नभिन्नास्त्यावाः ; B4 भिन्नसन्नरथवाहनः ; D13 छिन्नविच्छिन्नरथवाहनाः . D4 छिन्नमहारथविक्षतवाहनः . —( l. 152) Ñ2 B3 D5 -( s )नि- ( for -नि- ) Ñ2 -[ ङ ]वत-; B4 -[ ङ ]कण्ड- D5 -कर्णवक्त्राः ( for -कण्ठवक्त्राः ).

Colophon.—*Kāṇḍa name*: Ñ V1 B1-4 D4.13 लंका- काण्डे.—*Sarga name*: Ñ V B2-4 D4.13 वज्रदंष्ट्रवधः.—*Sarga no.* ( figures, words or both ) : Ñ1 V3 B2 D4.13 om.; Ñ1 V2 32; V1 33; B2 30; B4 34.

—B1 om. l. 154-158.—( l. 155 ) D13 प्रपेदे स तु ( for प्रतिपेदे स ). —( l. 156) Ñ2 स विचार्य; V3 संनिधाय; B3 स प्रेरयन्; D13 स निरीक्ष्य. —( l. 157 ) B3 D4.13 समभिक्रम्य ( for °तिक्रम्य ). D5 क्रोधादीर्घ ( for °दुष्णं ). —V1.3 D5 om. l. 158.—( l. 158 ) V1.2 तु ( for स ). D13 सह राक्षसैः ( for राक्षसाधिपः ).

## 30

( l. 1 ) B4 D5 भामिनी ( for भाविनी ). D5 रावणं युद्ध- शालिनं; T2.3 श्रुत्वा राक्षसपुंगवं ( for the post. half ). —( l. 2 ) V2 तथोत्थाय; V3 D4.11 तत्रो°; D1 ह्रतोत्थाय; T2.3 अंतःपुरात् ( for तदोत्थाय ). B2 ततो; B3 महा- ( for ययौ ). B1.4 तत उत्थाय प्रययौ ( for the prior half ). B1.4 देवी; B3 ययौ; T2.3 दीना ( for नाम्ना ). V3 B4 तथा; B2 D1.2.13 T2.3 महा; K ( ed. ) [ र ]क्षा सा ( for शुभा ). —( l. 3 ) K ( ed. ) धृत्वा ( for गृह्य ). V1 D4 च सा; V3 तथा; B1 [ अ ]न्वगा; B3 D1 तदा ( for तु सा ). —V3 om. l. 4. —( l. 4 ) Ñ2 त्रिभिश्च ( for मन्त्रिभिः ). B3 तथैव ( for मघवत्त्व ). D5 मंत्रिभिः सह, T2.3 वृद्धमंत्री: . —( l. 5 ) D1 संवृता ( for आवृता ). T2.3 वोरावृता( T3 corrupt ) परीवृता ( for

छत्रेण ध्रियमाणेन अतिकायपुरःसरा ।
चामरैर्वरनारीभिर्वीज्यमाना स्वलंकृता । [10]
गव्यूतिमात्रं विपुलां ध्वजमालोपशोभिताम् ।
उत्सारणं प्रकुर्वद्भिर्वेत्रजर्झरपाणिभिः ।
प्रविवेश सभां दिव्यां प्रभया द्योतमानया ।
दृष्ट्वा वै रावणं सा तु मयस्य दुहिता तदा ।
प्राप्तां देवीं ततो राजा प्रियां मन्दोदरीं तदा । [15]
दृष्ट्वा ससंभ्रमं तूर्णं परिष्वज्य दशाननः ।
मन्त्रिणां तु ततस्तत्रासनान्यादिदेश ह ।
सौवर्णानि विचित्राणि सोपधानानि सर्वशः ।
तेष्वासनोपविष्टेषु सुखासीनेषु मन्त्रिषु ।
पर्यङ्के सूपविष्टा तु देवी मन्दोदरी सुतः । [20]
अतिकायो महाबाहुः पितरं चाभिवाद्य तम् ।
मातरं चाभिवाद्याथ तदासनगतोऽभवत् ।
महाबलधरस्ततो महाकायवधार्दितः ।
शक्राद्याश्च विमर्दनः कषायीकृतलोचनः ।
समागममभिकाङ्क्षन् व्याकुलेनान्तरात्मना । [25]
अब्रवीद्विविधं सोऽथ महागम्भीरनिस्वनः ।
किमागमनकृत्यं ते देवि शीघ्रं तदुच्यताम् ।
तूर्णं मम समीपं तु किमर्थं त्वमिहागता ।
मन्त्रिभिः सहितां किं नु ब्रूहि साध्वि यथातथम् ।
एवमुक्ते तु वचने देवी वचनमब्रवीत् । [30]

---

the prior half) V3 D6 मुद्गर , B3 •-त्कर (for -ज्झर ) —(l. 6) B3 D4 [अ]पि (for [प]र), D1 बहुभिस् (for वृद्धभिस्) T1 बहु (for तथा) B3 तथा कन्याशतैरपि (for the post half) —(l. 7) B1 आयुधैर्घोरै B4 रक्षिभिस् (for राक्षसैस्) Ñ2 D3 सुमहात्मभिः , B3 राक्षसस्य महात्मन (for the post half) —(l. 8) T3 तौ (for तु) B4 सा तत्र D3 संप्राप्ता (for सभां तु) B3 यदा (for यत्र) Ñ2 B1 D2 ३ ४ ५ राक्षसेश्वर , V3 राक्षसेश्वर (for राक्षसाधिप ) —(l. 9) Note hiatus between the two halves V3 B1 ३ D4 (all to avoid hiatus) च(B1 चा, D3 सा)तिकाय (for अति°) V1 ३ B1 ३ ४ D4 ११ पुरःसर ; L (ed ) -पुर सरौ —(l. 10) Ñ2 V3 B3 D3 अप्सरसामभिर्, V3 अभि°, B3 अप्सरस्त्राभिर्, B4 °वारोभिर्, D1 ३ वेश्या°, D4 वरनामा च, D12 वेश्°, T1 ३ वीजयन्तीभिर् (for वरनारीभिर्) V D1 ३,४ D1 ४ वीज्यमाना V3 B4 स्वलंकृत , B3 (with hiatus) अलंकृत , B3 समतत , D4 T1 ३ °कृता (for स्वलंकृते ) —(l. 11) V1 ३ B4 D4 ३ गव्यूतिमात्र , V3 T1 ३ गुणा (V3 शता)यामां B1 D1 ३ ११ K (ed ) शता(D1 ११ समा)थ-यामं(B1 °म K [ed ] °मां)विपुल (for the prior half) B4 माल्याभि , T3 -मालाव (for मालोप ), B1 D1 ७ ११ h (ed ) शोभित —(l. 12) T1 ३ उत्सारणां च कुर्वद्भिर् (for the prior half) V3 D3 -मुद्गर , B3 ३ -त्कर (for -ज्झर ) —(l. 13) V1 ३ B1 ३ ४ D3 T1 ३ प्रविश्य च, D1 ११ प्रविश्य च (D1 तु) G (ed ) प्राविशच्च D4 च तां (for सभां) V3 D3 देवी D1 रम्यां (for दिव्यां) V1 ३ D3 ३ [व]चोत-मानया, D4 °नसा T3 °पश्चिव (for द्योतमानया) D13 प्रययौ घोरमायश्च (for the post half).—(l. 14) D3 दृष्ट्वैव (for दृष्ट्वा वै) D4 याता (for सा तु) T1 ३ भर्तारं द्रष्टुकामा सा (for the prior half) B3 तनया (for दुहिता) V1 हि सा T1 तथा K (ed ) तु सा (for तदा) —(l. 15) D3 तदा (for ततो) B3 स च D3 प्रिया , T1 ३ भार्यां (for प्रियां) B3 D3 तथा, T1 ३ तत G (ed ) शुभां (for तदा). D4 प्राप्तां मन्दोदरीं देवीं ततो राजा प्रियां तदा —(l. 16) h (ed ) स संभ्रमात् (for ससंभ्रमं) D1 दृष्ट्वा ससंभ्रमस्तूर्णम् (for the prior half).—After the prior half of l. 16, D11 ins

1* अवतीर्य रथात्तत ।
प्रियां मन्दोदरीं राजा

D1 उत्थाय च, D12 परिगृह्य (for परिष्वज्य).—V3 om l. 17–19 G (ed ) om. l. 17–21 —(l. 17) Ñ2 B3 D3 तथा (for ततस्) D1 ४ ह (for ह) T1 ३ न्यवेदयत् (for [आ]दिदेश ह) —B3 D3 om l. 18 —(l. 18) B1 ४ D1 ११ सौवर्णेषु (for सौवर्णानि). Ñ2 D3 सुवर्णरत्नचित्राणि (for the prior half).—(l. 19) V3 D3 D1 ३ ४ ११ प्रधानेषु B1 ४ तदा सर्वेषु B3 प्रधानेषु च (for सुखासीनेषु) V1 प्रणामैश्च मन्त्रिषु (for the post half) —(l. 20) T3 सा (for तु) V3 तूपविष्टा B3 चोपविष्टायां, D13 तूपविश्य च (for सूपविष्टा तु) B1 ३ ४ D1 ३ पर्यङ्के(D3 °ङ्के)सूपविष्टा D4 पर्यङ्कोपविष्टा T1 पर्यङ्के तूपविष्टा सा (for the prior half) B1 तदा, B3 देव्यां (for देवी) Ñ2 D1 ११ तत , T1 ३ स्वक K (ed ) सुखं (for सुत ) V3 B3 देवीं मन्दोदरीं प्रभु (B1 तथा) (for the post half) —(l. 21) B4 महाबाहु T1 ३ [S]पि तेजस्वी (for महाबाहु ). B3 D3 ४ च (for तम्) —(l. 22) D4 [अ]भिवन्द्य (for °वाद्य) G (ed ) यथावच्चाभिवाद्य (for the prior half) D13 तत्र (for तदा) —(l. 23) B4 -सत्त्वस्तो (for सततो) —D13 om (hapl ) from the post half up to the prior half of l. 26 N1 V3 D3 सकंपन , V3 ३ B1 D3 (all with hiatus) अकंपन , B3 सुकर्मेन (for महाकाय ) D4 भय (for वध ) —(l. 24) V B1 D1 ३,४ [अ]वमर्दन, B1 [अ]वमर्षण, B3 [अ]भि°, T3 [उ]प° (for विमर्दन) —(l. 25) V3 अभिकांक्षन् B3 °सकांक्षन् T1 ३ कांक्षमाणश्च (for अभिकाङ्क्षन्) K (ed ) आकुलेन (for व्या°) —D3 om l. 26–27 V1 reads l. 26 twice —(l. 26) V1 (both times) ३ B1 ४ D1 ३ विविध T1 ३ वचन (for विविधम्) N3 राजा, V1 (second time) वाक्य B3 वत्र (for सोऽथ) V3 निस्वन, B1 ३ D3 नि:स्वन , D1 ३,११ नि स्वन (for निस्वन ) T1 ३ भार्यां राक्षसपुंगव (for the post half) —(l. 27) K(ed) -कार्यं (for कृत्य) T3 एवमेव (for देवि शीघ्र) —(l. 28) T1 ३ त्व, K (ed ) वै (for तु) D3 T1 ३ इह चागता (for त्वमिहागता) —(l. 29) V1 D1 ३ ११ T1 ३ किं तु D1 साध्वि K (ed ) चेव (for किं नु) N3 D3 T1 ३ सर्वं, B1 तत्त्व, D4 किंचिद्, D13 सत्य (for साध्वि) V3 यथेप्सित —(l. 30) K (ed )

विज्ञाप्यं शृणु राजेन्द्र वाचे स्थाई कृताञ्जलिः ।
नापराधश्च कर्तव्यो वदन्त्या मम मानद ।
श्रुता मे नगरी दग्धा श्रुता मे राक्षसा हताः ।
धूम्राक्षसहिता वीराः प्रहस्तेन सहैव तु ।
भवन्तं युद्धकामं च निर्गन्तु कृतनिश्चयम् । [35]
इति सचिन्त्य राजेन्द्र समागमनकारणम् ।
न च युक्तं प्रमुखतः स्थातुं तस्य महात्मनः ।
रामस्य सुमहाभाग यस्य भार्या त्वया हृता ।
लक्ष्मणस्य च सौमित्रेर्यस्य नास्ति समो युधि ।
न च मानुषमात्रोऽसौ रामो दशरथात्मजः । [40]
एकेन येन वै पूर्वं बहवो राक्षसा हताः ।
चतुर्दशसहस्राणि जनस्थाननिवासिनाम् ।
खरश्च निहतः संख्ये तदा रामो न मानुषः ।
त्रिशिराश्च कबन्धश्च विराधो दण्डके हतः ।
शरेणैकेन वाली च तदा रामो न मानुषः । [45]
शङ्के चैनं महाराज मारीचस्य वधात्तदा ।
पितुश्च वचनाद्रामः प्रविष्टो दण्डकं वनम् ।
ब्रह्मचर्यव्रते युक्तः सह भ्रात्रा वनेचरः ।
तस्य भार्या जनस्थानादिहानीता पतिव्रता ।
अकारणकृतं यत्ते दोषाय समुपस्थितम् । [50]
पतिव्रतावरोधस्तु दोषमावहते महत् ।
न मह्यं रोचते युद्धमेतेषां मन्त्रिणां तथा ।
रामभार्या सती सा तु रामाय प्रतिदीयताम् ।
विभीषणेन चैवोक्तं पूर्वमेव महात्मना ।
गतस्तत्रैव चार्यो त्वां त्यक्त्वा राज्यं करिष्यति । [55]
जयाणि चैव रत्नानि प्रेषयामि रघूत्तमे ।

र् (for वचनम्). $T_{2.1}$ इत्युक्ता राक्षसेन्द्रेण मन्दोदर्यब्रवीत्पतिं. —(l. 31) $D_1$ विज्ञप्तिं. $V_3$ शृणु (for शृणु). $B_4$ त्वां $D_1$ त्वां ह; $D_4$ [S]ह त्वां; $D_{13}$ त्वां तु; K (ed.) वक्त्वां (for स्थाई). $V_3$ वाचे त्वां राक्षसेश्वर; $T_3$ यच्चाहं कृताञ्जलिः (for the post. half).—(l. 32) $D_4$ मापराधश्च; K (ed.) न हि रोषश्च (for नापराधश्च). $V_3$ तु (for च). $B_3$ $D_9$ मतव्यो; $B_1$ घर्तव्यो (for कर्तव्यो). $B_3$ नापराधश्च ...; $D_1$ नापराधोवधार्योऽयं (for the prior half). $B_3$ ... (for वदन्त्या). —After l. 32, K (ed.) ins.:

2* शृणुष्वैकमना मह्यं वचनं वाक्यमीप्सितम् ।

(l. 33) $D_1$ श्रुत्वा मे नगरं दग्ध (for the prior half). श्रुत्वा (for श्रुता).—(l. 34) K (ed.) -प्रमुखा (for -सहिता). $D_{2.3}$ च; $D_4$ $T_2$ ते (for तु). $V_2$ प्रहस्ताकम्पनेन तु; प्रहस्तेन सह प्रिया (for the post. half).—(l. 35) V $B_4$ $D_9$ योद्धुकाम (for युद्ध°). $V_3$ $D_{3.4}$ तु (for च). सर्वेत युद्धकांक्षन (for the prior half). V $B_4$ निर्गन्; ...कुश, $B_3$ निशम्य; K (ed.) गमने (for निर्गन्तु).—(l. 36) एव (for इति). $\tilde{N}_2$ reads in marg. राजेन्द्र.—After prior half of l. 36, $\tilde{N}_2$ $D_9$ ins.:

3* त्वां वक्तुं किंचिदागता ।
एतदेव महाराज.

[(l. 1) $D_9$ वाचे स्वाद कृताञ्जलि°.]

वाचे स्थाइ कृताञ्जलिः (for the post. half).—(l. 37) योद्धुं, $T_3$ युद्धे (for युक्तं). $D_4$ न च युद्धमुख तस्य; $T_3$ (ed.) युक्तं न (K [ed.] न युक्तं) प्रमुखे स्थातु (for the prior half). $T_3$ शक्यं; K (ed.) युद्धे (for स्थातु). $D_1$ युक्तं, सर्वं (for तस्य). $D_4$ दारार्थेस्य (for स्थातु तस्य). —(l. 38) $V_1$ च; $B_4$ तु (for सु). $D_1$ महाभाग समस्तस्य; (ed.) रामस्य च महेन्द्रेण (for the prior half). $B_3$ ...विधा हृता; $B_4$ $D_{13}$ $T_3$ हृता त्वया (by transp.). —(l. 39) K (ed.) राजेन्द्र (for सौमित्रेः). $D_9$ नास्ति यस्य (by transp.). $B_3$ रणे (for युधि).—(l. 41) $V_3$ $B_3$ $D_1$ ...वै (by transp.). $\tilde{N}_2$ $V_3$ $B_3$ transp. बहवो and ...—(l. 42) $V_3$ -सहस्राणां (for °णि). $\tilde{N}_2$ $D_{9.13}$ $T_{2.3}$ -निवासिनः (for °नाम्). —After the prior half of l. 43, $D_1$ *ins.*:

4* दूषणस्त्रिशिरास्तथा ।
खरश्चाशीविषाकारैः.

$V_3$ तस्माद्; $B_4$ तेन (for तदा). K (ed.) दूषणश्च महाबलः (for the post. half).—$V_2$ om. (hapl.) l. 44–45. —(l. 44) K (ed.) महाबाहुर् (for कबन्धश्च). —After the prior half of l. 44, K (ed.) ins.:

5* हतो राक्षसपुंगवः ।
कबन्धश्च महातेजा.

K (ed.) हता (for हत°). —(l. 45) $B_4$ मारीचस्य (for वाली च). $B_4$ तेन; $T_3$ तथा (for तदा). K (ed.) वानरेन्द्रो निपातितः (for the post. half).—(l. 46) $D_2$ च तु; K (ed.) चैव (for चैनं). $B_3$ महाबाहो, $D_9$ °भाग (for महाराज). $T_{2.3}$ शङ्के न मानुष राम (for the prior half). $V_1$ $T_3$ यथात्तथा; $B_4$ वधाद्दह; $D_4$ महात्मनः; $D_{13}$ वधे तदा (for वधात्तदा). $D_1$ मारीचमथनादहं (for the post. half). —(l. 47) $D_2$ स (for च). $T_{2.3}$ दण्डकावन (for °कं वनम्). K (ed) दण्डकारण्यमाश्रित° (for the post. half).—(l. 48) $\tilde{N}_2$ $V_2$ -भ्राता (for भ्रात्रा). $T_3$ वने रत°. —(l. 49) K (ed.) त्वयानीताविजानता (for the post. half).—(l. 50) B $D_{2.11}$ अकारण $D_3$ कृते (for -कृत). $\tilde{N}_2$ $D_3$ $T_3$ वधे, $B_{1.3}$ यत्र; $B_4$ यत्तु; $D_3$ $T_3$ तत्र (for यत्ते). $D_4$ $T_3$ दोषोऽयं समुपस्थितः (for the post. half). —(l. 51) $V_{1.2}$ -[अ]वरोधस्; $T_3$ -विरोधस् (for -[अ]वरोधस्). $B_1$ च (for तु). $D_1$ आह च ते; $T_3$ आवादयेत् (for आवहते). V $B_1$ $D_{2.6.9.11}$ महान्; $T_{2.3}$ सदा (for महत्).—(l. 52) *Note hiatus between the two halves.* $\tilde{N}_2$ $D_9$ तदेव; $V_{1.3}$ $B_2$ $D_4$ न शक्यं; $T_{2.3}$ तन्मह्यं (for न मह्यं). $\tilde{N}_2$ $D_9$ ममैषां; $T_3$ यदेषां (for एतेषां). $V_1$ तव, $D_3$ अपि; $D_{13}$ तदा (for तथा). —(l. 53) $B_4$ तु सा (for सती). $V_3$ $B_{2.3}$ $D_{13}$ सा तु; $B_3$ शीघ्रं, $B_4$ $T_{2.3}$ सीता; $D_4$ सार्वी (for सा तु). $D_3$ रामभार्यां समानीय (for the prior half). $D_3$ राघव (for रामाय). $B_1$ $T_{2.3}$ राघवाय ($B_4$ °भायेन) प्रदीयतां (for the post. half).—(l. 55) $D_2$ गतस् (for गतस्).

